THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 26*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA



THE

# MṚGĀṄKALEKHĀ NĀṬIKĀ



*Printed by Jai Krishna Das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

1929

# मृगाङ्कलेखा नाटिका

श्रीविश्वनाथदेव प्रणीता ।

काशिकराजकीय संस्कृत पुस्तकालय सरस्वतभिवनाध्यक्षेण
साहित्याचार्येण खिस्ते- इत्युपाख्यनारायणशास्त्रिणा
सम्पादिता ।

# MRGĀṄKA LEKHĀ NĀTIKĀ

By

VIS'VANĀTHA DEVA KAVI

Edited with Introduction etc.

By

NĀRĀYAṆA S'ĀSTRĪ KHISTE, SĀHITYĀCHĀRYA,

Assistant Librarian, Govt. Sanskrit Library,

Sarasvatī Bhavana, Benares.

---

1929

# उपोद्घातः

( १ )

अथेयमुपक्रम्यते **मृगाङ्कलेखा**ऽभिधाना नाटिका मुद्रयित्वा प्रकाशयितुम् । अस्याः प्रणेता कविः श्री **विश्वनाथदेवो** नाम । अयं च दाक्षिणात्यो दक्षिणदेशे गोदावरीतीरपवित्रे **धारासुरनगरे त्रिमल्लदेवा**ल्लब्धजन्मा वाराणस्यां निवासं कल्पितवान् ।

अस्य समयश्च विक्रमशकस्य सप्तदशं शतकम् । अस्माभिरुपलब्धे प्रायो ग्रन्थकर्त्रैव स्वयं लिखिते प्रकृतनाटिकापुस्तके संवत् १६६४ इति समयो निर्दिष्टो वर्त्तते तदनुसारेण संवत् १६४० चत्वारिंशदाधिक-षोडशशततमविक्रमशकानन्तरभावित्वमस्य वयं कल्पयामः ।

**न्यायसार**प्रणेता वैक्रमाष्टादश शतककालिको **माधवदेवो**ऽपि नामसादृश्याद् गोदावरीतीरवर्त्ति**धारासुर**नगराऽभिजनवत्त्वाच्च प्रकृतनाटिकाप्रणेतु**र्विश्वनाथदेवस्यैव** वंशोद्भव इति निर्विवादं वक्तुं शक्नुमः ।

इतोऽधिकं ग्रन्थकर्तुर्विषये किमप्यैतिह्यं नाऽवगम्यते । अनेनाऽपरेऽपि केऽपि ग्रन्थाः प्रणीता नवत्यपि बोद्धुं किमपि द्वारं नास्ति ।

प्रकृतनाटिकायां तत्प्रणेतुः कवितालालित्येन भृशं समाकृष्टा वयं तन्मुद्रणे प्रवृत्ताः स्मः ।

( २ )

अथेदानीं प्रकृतनाटिकामधिकृत्य किमपि समालोचनमारचयामः—तत्रोपरूपकेषु प्रकृतिभूताया नाटिकाया लक्षणं तु यथोक्तं **साहित्यदर्पणे—**

नाटिका क्ल्यातवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ।
स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृता ऽथवा ।
नवानुरागा कन्याऽत्र नायिका नृपवंशजा ।
सम्प्रवर्त्तेत नेता ऽस्यां देव्यास्त्रासेन शङ्कितः ।
देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा ।
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कैशिकी स्वल्पविमर्शाः सन्धयः पुनः ।

इत्युक्तं लक्षणमत्र बाढं संवदति । तथा हि—प्रकृतनाटिकायामपि चत्वार एवाऽङ्काः । अत्र कलिङ्गाऽधिपः कर्पूरतिलको नाम राजा प्रधाननायकत्वेन कल्पितः । स च शृङ्गारप्रायचेष्टितो धीरललित एव वर्णितः । तदग्रमहिषी देवी विलासवती । रत्नचूडो नरपतेः प्रधानाऽमात्यः कामरूपेश्वरतनयां मृगाङ्कलेखां सिद्धकथितसार्वभौमपतिकामाकलय्य तां स्वस्वामिना संयोजयितुमिच्छति । सिद्धियोगिनीनामिका परिव्राजिका महीपतेर्हितकारिका मृगाङ्कलेखां महीपतेरन्तः पुरं समाकर्षति । अथ मिथः प्रेरितनयनयोरनयोर्यूनोः सङ्कल्पजन्मा चेतसि विजृम्भते । सखी-

नामानुकूल्येन मिथः सम्मेलनादिना परिपुष्टा रतिरभिवर्द्धते । ततः परं दानवाऽधिपः शङ्खपालो मृगाङ्कलेखामपहृत्य श्मशाने कालिकायतने तां स्थापयति । मृगाङ्कलेखाऽपहारक्षुब्धचेता उन्मत्तो राजा कर्पूरतिलकः स्वप्राणपरित्यागेच्छया श्मशानं प्रयाति । तत्र दानवेशकरान्मृगाङ्क-लेखामाच्छिद्य हत्वा च तं दानवेन्द्रं मृगाङ्कलेखां पुनः प्रत्यानयति । अत्रान्तरे कामरूपेश्वरः कलिङ्गेश्वरान्तिकमुपयाति ।

तत्र मृगाङ्कलेखां प्रत्यभिजानाति । सर्वे मिथः सङ्गमेन प्रहृष्टा भवन्ति । नाटिका च समाप्यते । इदं संविधानकमंशतो रत्नावलीमाल-विकाग्निमित्रमालतीमाधवकर्पूरमञ्जरीत्यादिरूपकैः संवदति । रचना च प्रायो निरुक्तरूपकरचनाभिर्बहुंशे समानाकारा प्रतिभाति । बहुषु स्थलेषु कवेर्नाट्यरचनायामकौशलमिव प्रतीयते, तन्निपुणनिरीक्षकैरेव निध्येयम् । अस्माभिः पुनः प्रकृतनाटिकासम्पादकैस्तद्दोषकीर्तनं न यो-ग्यमिति परिहृतम् । अस्तु किमपि । मानवे संसारे न खलु किमपि निर्दोषं वस्तु । सदोषमपि विपुलगुणमुपादेयमेवेति नीतिमनुसरद्भिरस्मा-भिर्नाटिकेयं काव्यरसिकानां करकमलेषूपायनीक्रियते । इमां मृगाङ्क-लेखां शिवस्वभावाः सन्तः शिरसा वहन्त्वित्याशास्महे । प्रार्थया-महे च गुणगृह्यान् विपश्चितो भ्रमप्रमादादिजानि स्खलितानि ते क्षाम्यन्त्विति ।

---

( ३ )

प्रकृतनाटिकादर्शपुस्तकं प्रकाशनाय सस्नेहं वितरद्भ्यः सोलापुरकरोपाख्य पं० रामशास्त्रिपौराणिकेभ्यः सादरमनेकान् धन्यवादान् वितरामः । यैरस्माकं मित्रवरैर्येन केनाप्यध्वना प्रकृतपुस्तकसम्पादने महनीयं साहाय्यमाचरितं, तेभ्यः सर्वेभ्यः सादरमनेके धन्यवादाः। सर्वान्ते सर्वप्रधानभूतानां काशीस्थराजकीयपाठालयप्रधानाध्यक्ष प्रभुवर श्रीगोपीनाथकविराजपूज्यपादानां महनीयं साहाय्यं सादरं सधन्यवादमभिनन्द्य समुपसंहरामः पल्लवितमुपोद्घातमिमम् ।

सरस्वतीभवनम्
काशी

विद्वज्जनवशंवदः
**नारायणशास्त्री खिस्ते**

॥ श्रीः ॥

# मृगाङ्कलेखानाटिकास्थितपात्रपरिचयः ।

## पुरुषाः

| | | |
|---|---|---|
| १ सूत्रधारः | | |
| २ पारिपार्श्वकः | | |
| ३ कर्पूरतिलकः | = | कलिङ्गराजः प्रधाननायकः |
| ४ रत्नचूडः | = | कलिङ्गराजकर्पूरतिलकस्य मुख्यामात्यः |
| ५ शङ्खपालः | = | दानवराजो मृगाङ्कलेखाऽपहर्ता |
| ६ शाखामृगमुखः | = | कर्पूरतिलकस्य वयस्यो विदूषकः |
| ७ कुण्डरुधिरः | = | राक्षसः |
| ८ कलकण्ठः | = | कर्पूरतिलकस्य वयस्यः |
| ९ कामरूपेश्वरः | = | मृगाङ्कलेखायाः पिता |
| १० नीतिवृद्धः | = | कामरूपेश्वराऽमात्यः |
| ११ चण्डघोषः | = | कामरूपेश्वरतनयः |
| १२ तिग्मप्रतापः | = | कर्पूरतिलकस्य सेनापतिः |

वैतालिकोद्यानपालकञ्चुकिप्रतिहारिपिशाचप्रभृतयः ।

## स्त्रियः

| | | |
|---|---|---|
| १ नटी | | |
| २ मृगाङ्कलेखा | = | कामरूपेश्वरतनया प्रधाननायिका |
| ३ कलहंसिका | = | मृगाङ्कलेखासखी |
| ४ लवङ्गिका | = | ,, |
| ५ सिद्धियोगिनी | = | कर्पूरतिलकस्योपकारिका परिव्राजिका |
| ६ विलासवती | = | कर्पूरतिलकस्य प्रधानमहिषी |
| ७ नवमालिका | = | विलासवत्याः सखी |
| ८ लम्बस्तनिका | = | कुण्डरुधिरस्य गृहिणी |

॥ श्रीः ॥

# मृगाङ्कलेखा नाटिका ।

---

दूरादङ्घ्रिप्रहारप्रबलभरनतप्रौढदर्वीकरेन्द्र-
श्वासोद्रेकप्रशुष्यज्जलधिजलभरत्रस्तपाठीनकूटम् ।
गङ्गारिङ्गत्तरङ्गावलिवलितजटाक्षालनं शूलपाणेः
पायादायासखेदाज्जगादिदमखिलं ताण्डवाडम्बरं तत् ॥ १ ॥

अपि च—

वामां वामाङ्गभागे कलयति मदनप्लोषकीर्तिं च धत्ते
सर्वैश्वर्याकुलोऽपि प्रकटयति करे नारमेकं कपालम् ।
दाता मुक्तेर्गरीयान्भवति स भुवने यः स्वयं चाविमुक्तः
पायान्मायादुरूहो गिरिवरतनयावल्लभो भूतनाथः ॥ २ ॥

अपि च—

रोषाकुञ्चितपाणिपल्लवतया सेवाञ्जलिर्नो कृतः
स्तब्धैकाङ्गतया च नो नतिततिर्विस्तारिता शम्भुना ।
नो किञ्चिद् गदितं च मूकपदवीं वक्त्रैकदेशे गते
पार्वत्याः सफलैव मानपदवी पायात्त्रिलोकीतलम् ॥ ३ ॥

नान्द्यन्ते सूत्रधारः—अलमतिविस्तरेण । अद्य कि-
लाचलतनयालोचनचारुचञ्चरीकचक्रवालचुम्बितवदनसरोजस्य
ताण्डवाडम्बराविलुलितगङ्गाजलधाराधौतनरकपालावलीसञ्जात-
नवीनचन्द्रशेखरकौतूहलाकुलितसकललोकवन्दितपादारविन्दस्य

निटिलानलभस्मीकृतमकरकेतनविरहविधुरतिसन्तोषकस्य वाराणसीपतेर्विश्वेश्वरस्य यात्रायां मिलिता एव पार्षदाः। तथा हि—

एते वङ्गकलिङ्गसिंहलवलचोलङ्गभूलिङ्गगा-
श्चश्वद्राविडगौडचोलाविलसत्काश्मीरसौवीरजाः।
अन्ये लाटवराटभोटतटगाः कर्णाटचेरोद्भवाः
केऽप्यन्ये कविवाक्यकौशलकलाविज्ञा महाराष्ट्रजाः॥ ४॥

तदत्र गत्वा निजगुणकणिकाकौतूहलप्रदर्शनाय सकलमेव विदग्धजनं प्रार्थयामि। अथवा कृतं प्रार्थनया। यतः—

विकसितसहकारश्रेणिकुञ्जे मिलिन्दाः
सरसनलिनवापीमध्यदेशे मरालाः।
निबिडजलदकाले किं च ते नीलकण्ठाः
कथय किमिह ते ते प्रार्थनामाश्रयन्ते॥ ५॥

(ऊर्ध्वमवलोक्य) अये कथमुदयाचलान्तारित एव भगवानम्भोजिनीवल्लभः परां कोटिमधिरोहति रमणीयतायाः। (अञ्जलिं बद्ध्वा)

अञ्चलान्तरितचोलसुन्दरी-
कुङ्कुमाक्तकुचमण्डलप्रभम्।
कोकशोकदहनाम्बुदमेकं
पद्मिनीरमणमेष नतोऽस्मि॥ ६॥

(इति प्रणम्य) तद्यावद् गृहमेव गत्वा रमणीमाहूय कस्यापि शृङ्गाराद्भुतप्रायस्य प्रबन्धस्याभिनयाय सज्जीकरिष्यामि सकलमेव कुशीलवजनम्। (नेपथ्याभिमुखमवलोक्य) इद-

मत्मदीयं गृहम् । यावत्प्रविशामि । ( प्रविश्य सर्वतोऽवलोक्य ) ( सहर्षम् ) कथमत्र सर्वतएव महोत्सवारम्भः । तथा हि—

एषा कुन्तलमालिका सुकुसुमश्रेणिं विधत्ते जवा-
दन्या चन्दनमङ्गना कुचतटे विस्तारयन्ती स्थिता ।
अप्यन्या चरणेऽपि यावकरसं बाला तनोत्यादरा-
द्वालीलोचनमञ्जनेन तरुणी सेयं करोत्याञ्जितम् ॥ ७ ॥

अपि च—

एताः प्रियालतरुसुन्दरमञ्जरीभिः
कर्णावतंससरसीरुहमञ्चयन्ति ।
द्राक्षालतापरिवितोपवनालिमेताः
सारङ्गशावनयनास्त्वरितं प्रयान्ति ॥ ८ ॥

तन्न जाने महोत्सवकारणम् । तावत्प्रियां व्याहरामि । प्रिये ! इतस्तावत् ।

( प्रविश्य ) नटी—(१)अज्ज ! घरकम्मवावडा अहं तुए कीस आलविदा ? ।

सूत्र०—आर्ये, कथय केयं महोत्सवपरम्परापारिणतिरस्मद्गृहे ।

नटी—अज्ज(२) किल भअवदो अणंगसासणस्स दंसणुक्कंठि-

---

( १ ) आर्य ! गृहकार्यव्यापृताऽहं त्वया कीदृशमालापिता ।

( २ ) अद्य किल भगवतोऽनङ्गशासनस्य दर्शनोत्काण्ठितसकल-नागरजनस्य अग्रतः कौतूहलं कर्तुं पर्युत्सुकः सकलएव कुशीलवजनः । स एष मधूत्सवारम्भः । तत्कथय किमत्राऽभिनीय कौतूहला-क्रान्तमानसं सम्पादयामो नागरजनम् ।

दसअलणाअरजणस्स अग्गदो कोदूहलं कादुं पज्जुस्सुओ सअलो ज्जेव कुसीलवजणो । सो एस महूसवारंभो । ता कहेहि किं एत्थ अभिणीअ कोदूहलक्कंतमाणसं संपादेम्ह णाअरजणं ।

सूत्र०—तदेतादृशि वाराणसीनगरे समीचीनतमप्रबन्धेन मृगाङ्कलेखोदयेन सकलकलाकोविदानाममीषां चित्तचकोरे चमत्कारं कुर्मः । अथवा कृतमस्माकं परिहासैकफलकेन कविगोष्ठीविनोदनकौतूहलेन । यतः,

कुम्भाम्भसा जलनिधेरभिषेकपूजा
काचैर्विदूरधरणीधरसेवनानि ।
दीपावलीविरचनं न नु पद्मबन्धोः
स्मेराननं न वितनोति जनं किमेतत् ॥ ९ ॥

( आकाशे ) किं ब्रवीषि स्वत एव काव्यकलाकलापकुशलाः समाजिका इति । ( विहस्य )

केयं शङ्का बत कविकथालम्पटोऽसौ प्रसिद्धो
विद्वत्सार्थः प्रथितयशसा तर्जितोद्दामचन्द्रः ।
शुश्रूषुस्ते किमपि गदितं पूरयैतस्य वाञ्छां
द्वित्रैरिन्दुः स्वकरनिकरैः क्षीरधिं नो धिनोति ॥ १० ॥

( श्रुत्वा सोल्लासम् । ) कथं नियोजयन्ति मामार्यमिश्राः पर्षदाराधनाय । तदनतिक्रमणीयं गुरोर्वचनम् । ( नटीं प्रति । ) प्रिये ! प्रस्तूयतां सङ्गीतकम् ।

नटी—(३)ता किं गीदं ?

---

( ३ ) तत् किं गीतम् ।

सूत्र०—अथ किम्।

नटी--(१) ता अग्गदो तुह्माणं भोदु।

सूत्र०--( गायति )

सुरभिसमीरणवेल्लल्लवलीलतिकामनोज्ञनिकुञ्जे।

रचयति पञ्चमनादं कुण्ठितपान्था हि कलकण्ठी॥ ११॥

नटी-(गायति) (२)मअरन्दपाणमहुरं गीदं सुव्वइ मत्तमहुअरीणम्।

एदेहि भमरेहिं फुल्लिदमल्लीलदाकुंजे॥ १२॥

सूत्र०---तदिदानीं का खल्वमीषां चेतश्चकोरचमत्काराय मृगाङ्कलेखा भवेत्।

नटी—मिअङ्कलेहाज्जे व(३)।

( नेपथ्ये ) भाव! त्वर्यताम् २।

सूत्र०-(स्मृतिमभिनीय सहर्षं) नन्विमामेव गोदावरीतीरपवित्रधारासुरनगरनिवासिनः साम्प्रतविरचितवाराणसीवसतेस्त्रिमल्लदेवतनूजस्य विश्वनाथशर्मणः कृतिं मृगाङ्कलेखाभिधानां नाटिकामभिनेतुमुद्युक्त एवास्मि।

( प्रविश्य ) पारिपार्श्वकः--भाव! अनतिप्रसिद्धस्य तस्यैव दाक्षिणात्यस्य कवेः कृतौ प्राचीनप्रबन्धानवधूय पर्युत्सुकः सामाजिकजनः।

सूत्र०---मारिष! उचितमेवैतद्विदग्धपुरुषाणाम्। तथा हि--

(१) तत् अग्रतो युष्माकं भवतु।

(२) मकरन्दपानमधुरं गीतं श्रूयते मत्तमधुकराणाम्।

एतैर्भ्रमरैः फुल्लितमल्लिलताकुञ्जे॥

(३) मृगाङ्कलेखैव।

अतिपरिचयदोषात्प्रौढबालेव वाणी
न रचयति विनोदं प्राक्तनानां कवीनाम् ।
अभिनवकविवाचा काऽपि रीतिर्नवीना
युवतिरिव विधत्ते प्रौढमानन्दमन्तः ॥ १३ ॥

( नेपथ्ये ) साधु भोः कुशीलव साधु । ( अतिपरिचये-त्यादि पठति । )

सूत्र०--( विलोक्य ) एष देवस्य कर्पूरतिलकस्य प्रधानसर्वस्वं रत्नचूडशर्मा साधुवादपुरःसरं इत एवाभिवर्तते । तदनन्तरक-णीयाय सज्जीभवामः । ( इति निष्क्रान्तौ )

प्रस्तावना ।

( ततः प्रविशति रत्नचूडः । )

रत्नचूडः--साधु भोः कुशीलव साधु ।(अतिपरिचयेत्यादि पठित्वा) अत एवास्मत्स्वामी कलिङ्गेश्वरः कामरूपेश्वरतनयां मृगा-ङ्कलेखां मृगयाप्रसङ्गेनावलोक्य न तथा चिरपरिचितां विलासवतीं मन्यते । किं बहुना,

नाङ्गं भूषणभूषितं रचयति प्रीणाति वीणारवै-
र्नो संसत्सु करोति चिन्तनभरादानन्दबाष्पोद्गमम् ।
चित्रे चञ्चललोचनां करतले धर्तुं समुद्योगवा-
नायासं गमितः स्मरेण विशिखैर्धीरस्वभावोऽप्ययम् ॥ १४ ॥

अपि च

वारं वारं हसति किमपि श्वासमञ्चत्युदारं
स्फाराम्भोभिः स्थगयति दृशौ स्रस्तकेशोत्तरीयः ।

हारं द्वेष्टि श्रयति विजने पङ्कजश्रेणिशय्यां
पीयूषांशुं सपदि मनुते तिग्मरश्मिप्रतापम् ॥ १५ ॥

तदिदानीं तत्सङ्गमोपायमनोरथं फलितमिव पश्यामि । यतस्तद्रूपोन्मादमोहितस्तां तिरस्कारिण्या विद्यया यावदपहरति दानवः शङ्खपालो नाम तावद्भगवत्या सिद्धियोगिन्या महाराजैकपक्षपातिन्या समाकृष्टैवान्तःपुरम् । उक्तं च देवीं प्रति स्थापनीया सखीत्वेयं बाला मृगाङ्कलेखा । निर्मितश्च तयैवाद्य मकरन्दोद्याने वसन्तोत्सवनिर्भर इति । ( ऊर्ध्वमवलोक्य ) कथमुदयाचलकुरविन्दकन्दलशिलाशोभाकामुकः कामुकइव रागसङ्कुलो रजनीविरामशंसी अर्द्धोदितः पद्मिनीरमणः ।

नेपथ्ये वैतालिकयोरेकः--

जय जय महाराजाधिराज ! कलिङ्गराज ! सुखाय प्रभातवेला तत्रभवतो भूयात् । सम्प्रति हि—

फुल्लाम्भोजपरागमांसलमिलन्मत्तालिमालाकुल-
व्याहारैरियमत्र पङ्कजवनी वाचालभावं गता ।
अस्तं याति कलानिधौ कुमुदिनी सङ्कोचदीनानना
जाता सम्प्रति चक्रवाकमिथुनं सन्तोषमालम्बते ॥ १६ ॥

तत्रैव द्वितीयः—

जय जय कलिङ्गविलासिनीलोचनानङ्ग ! सुखाय प्रभातवेला तत्रभवतो भूयात् । सम्प्रति हि—

निद्राभङ्गविघूर्णमाननयनं विस्रस्तधम्मिल्लकं
जृम्भारम्भविलासदर्शितलसन्नाभीगभीराशयम् ।

किञ्चित्कुञ्चितलोचनाञ्चलतया मन्देक्षणं सुन्दरी
कान्तागारगता प्रयाति भवने सूर्योदयाशङ्किता ॥ १७ ॥

अपि च—

क्रीडासद्मनि केलिलम्पटतया सम्भोगखिन्नाङ्गना-
निद्राभञ्जनकोविदो गृहशुकव्याहारदीक्षागुरुः ।
जीमूतध्वनिमन्थरो बधिरयन्सर्वं त्रिलोकीतलं
प्रातःकालमृदङ्गमङ्गलरवः शोभां विधत्तेतराम् ॥ १८ ॥

रत्न०—(ऊर्ध्वमवलोक्य) कथमयं देवः कर्पूरतिलकः सकलनिशाजागरक्षापक्षामगात्रः पाण्डुरकपोलमण्डलः द्वारदेशगतेन शाखामृगमुखेन प्रियवयस्येन सङ्गच्छमानो मनसा तत्सम्बन्धिनीं कथां कथयन् शय्यामन्दिरमध्यास्ते । तदहमपि राज्यभारनिर्वाहायाभ्यन्तरमेव प्रविशामि ।

इति निष्क्रान्तः । विष्कम्भकः ।

( ततः प्रविशति यथानिर्दिष्टो राजा विदूषकश्च । )

राजा—

केनापि चञ्चलदृगञ्चलविभ्रमेण
चन्द्रानना मयि चकार सरोजमालाम् ।
हा ! हन्त ! सा स्मृतिगतापि तनोति दाहं
केयं प्रकाररचना मकरध्वजस्य ॥ १९ ॥

अपि च—

सा बन्धूकद्युतिरधरयोर्माधुरी साऽक्षराणां
ते कालिन्दीसलिलकुटिलाः कुन्तलप्रान्तभागाः ।

स्वर्णाम्भोजद्युतिसहचरी सा कुचाऽऽभोगलक्ष्मी-
स्तन्नस्तन्व्या गमनमलसं मानसं नो जहाति ॥ २० ॥

विदू०–(उपसृत्य) (१)जेदु २ पिअवअस्सो ।

राजा–(अश्रुतिमभिनीय) पुनस्तदेव पठति ।

विदू०–(२)अच्चरिअं २ कहं पिअवअस्सो पहादमंतं भणादि । ता अहं पि ब्रह्मणीए कदस्स पच्चग्गमोअअस्स कहालावेहिं विणोदेह्मि अप्पाणअं ।

राजा–(विलोक्य) कथं प्रियवयस्यः ।

विदू०–(३)तुह सोत्थि भोदु । भो वअस्स किं तुमं भिक्खुअबम्हणो विअ पढणेक्करसो कुरकुराअंतो चिट्ठसि । ता कहेहि कीदिसी सा जाए कुंचिदेहिं लोअणेहिं तुमं पेक्खिदो ।

राजा–सखे किं वर्ण्यते सा । यस्याः—

नीलेन्दीवरमेव लोचनयुगं बन्धूकतुल्योऽधरः
कालिन्दीजलचारुकुन्तललता बाहू मृणालोपमौ ।
रम्भागर्भसमानमूरुयुगलं किं वा बहु ब्रूमहे
सेयं कापि नवीनमीननयना सर्वोपमानिर्मिता ॥ २१ ॥

---

(१) जयतु २ प्रियवयस्यः ।

(२) आश्चर्यमाश्चर्यम् । कथं प्रियवयस्यः प्रभातमन्त्रं भणति । तदहमपि ब्राह्मण्या कृतस्य प्रत्यग्रमोदकस्य कथालापैर्विनोदयाम्यात्मानम् ।

(३) ते स्वस्ति भवतु । भो वयस्य किं त्वं भिक्षुकब्राह्मण इव पठनैकरसः कुरकुरायमाणस्तिष्ठसि । तत्कथय कीदृशी सा यया कुञ्चिताभ्यां लोचनाभ्यां त्वं प्रेक्षितः ।

इदानीं च तस्याः—

इन्दुं निन्दति पार्वणं मुखशशी मीनाङ्कनां लोचने
धम्मिल्लोऽपि कलिन्दशैलतनयां दन्तावली मौक्तिकम् ।
किञ्चान्यत्कमनीयकाञ्चनरुचस्तस्याः स वृद्धिं गतो
लावण्याम्बुधिरन्धयत्यनुदिनं यूनां मनःसैकतम् ॥२२॥

विदू०-(१)भो वअस्स कीस णाभिसरासि तं मिअलोअणं ।

राजा-वयस्य सम्यगभिहितम् । तथापि,

दृष्टा मत्तचकोरचारुनयना दैवेन यावन्मया
तावत्पञ्चशरश्चकार हृदयं बाणावलीसङ्कुलम् ।
कस्येयं क गता क वा प्रचलिता किं वा वनश्रीरियं
किं वा कामविलासिनीति न मया ज्ञाता न मुग्धात्मना॥२३॥

तन्न जाने काऽत्र प्रतिपत्तिरिति ।

(नेपथ्ये) सुखाय वसन्तावतारो भवतु देवस्य । सम्प्रति हि-

रम्यैः कोकिलकाकलीकलकलैर्वाचालमास्ते वनं
जेतुं त्रीणि जगन्ति किं च मदनः सानन्दमुज्जृम्भते ।
माकन्देषु लसन्ति चञ्चलदृशां दोलाविलासाः कलं
गुञ्जन्ति प्रतिपल्लवं मधुकराः किं कामदेवाज्ञया ॥ २४ ॥

विदू०-(२)भो वअस्स एदे वंदिविंदारआ रदुराअं अहिणं-

---

( १ ) भो वयस्य ! कीदृशं नाऽभिसरसि तां मृगलोचनाम् ।

( २ ) भो वयस्य । एते बन्दिवृन्दारका ऋतुराजमभिनन्दन्ति । तदेहि प्रमदवने मदनमहोत्सवं प्रेक्षमाणः आत्मानं विनोदय ।

दंति । ता एहि पमदवणम्मि मअणमहूसवं पेक्खंतो अप्पाणअं विणोदेहि ।

राजा–वयस्य सम्यगभिहितम् । एहि तत्रैव गच्छामः ।

( इति परिक्रामतः । )

विदू०–(१)एदं कोइलालावेहि संकुलं पमदवणं ता एत्थ पविसदु पिअवअस्सो ।

राजा–(प्रविश्य समन्तादवलोक्य) अहो सर्वत एव वसन्तावतारः । तथा हि—

सपदि मुकुलितेयं किंशुकानां वनाली
ललितमधुपमाला विभ्रमं सन्तनोति ।
इह घनमकरन्दामोदमाद्यन्मिलिन्दा
विलसति सहकारश्रेणिराकन्दकुञ्जा ॥ २५ ॥

अपि च,

इह किसलयलीलालोलशाखो रसालः
कलयति कलगीतं कोकिलालीवितीर्णम् ।
ललितनवलवङ्गीसङ्गभङ्गीविलासै-
रभिनवमिह भृङ्गी गीतमङ्गीकरोति ॥ २६ ॥

( स्पर्शमभिनीय सरोमाञ्चम् )

कावेरीजलसङ्गशीतलशिलापृष्ठे लुठन्तः क्रमा-
दान्ध्रीपीनपयोधरोच्चशिखरप्राग्भारसञ्चूर्णिताः ।

---

( १ ) एतत् कोकिलालापैः सङ्कुलं प्रमदवनं तदत्र प्रविशतु प्रियवयस्यः ।

चोलीलोचनलालिताः कुचतटे लाटीभिरालिङ्गिता
दूता एव मनोभवस्य भुवने चञ्चन्ति चैत्रानिलाः ॥ २७ ॥

अपि च ।

उन्निद्राम्भोजरेणूत्करदरदलनामोदमाद्यन्मिलिन्दः
स्पन्दन्माकन्दवीथीपथि पथिकदशालम्बनान्मन्दमन्दः ।
हिन्दोलाकेलिलीलाऽलसललितदृशां लासयन्कुन्तलाली-
मुल्लासी शीतलाङ्गः किसलयति मनश्चैत्रचारी समीरः ॥२८॥

विद०-(१)भो वअस्स एदं मारुदं वण्णिअ पंडिदगव्वं उव्वह-
सि । ता अहं पि एणं सिंदुवारमंजरीहिं संकलिदं मल-
अमारुदं वण्णिअ पंडिदो हुविस्सं ।

राजा-वयस्य ! एवं क्रियताम् ।

विदू०-(२)एसो सिंघलकामिणीघणथणत्थाणंमि कत्थूरिआ-
पङ्कासोसणलंपडो दविडजामाणस्स पाडच्चरो ।
तेलंगीवसणस्स णच्चणकरो पंडीण लीलागुरू
मंदं वच्चादि मंजरीहिँ कलिदो कामिव्व चेत्ताणिलो ॥२९॥

---

(१) भो वयस्य ! एतं मारुतं वर्णयित्वा पण्डितगर्वमुद्वहसिं । तदहमपि एतं सिन्दुवारमञ्जरीभिः सङ्कलितं मलयमारुतं वर्णयित्वा पण्डितो भविष्यामि ।

(२) एष सिंहलकामिनीघनस्तनस्थाने कस्तूरिका-
पङ्काशोषणलम्पटो द्रविडजामानस्य पाटच्चरः ।
तैलङ्गीवसनस्य नर्त्तनकरः पाण्ड्यानां लीलागुरु-
र्मन्दं वर्त्तते मञ्जरीभिः कलितः कामीव चैत्रानिलः ।

राजा—( समन्तादवलोक्य ) । कः कोऽत्र भोः ।

( प्रविश्य उद्यानपालः )

उद्यान०—आज्ञापयतु देवः ।

राजा—क्वचिद्विनोदस्थानमावेदय ।

उद्यान०—अतिमनोहरं माधवीलतामण्डपमवधारयामि देवावास-
योग्यम् ।

विदू०—(१)ता अग्गदो होहि ।

राजा—गच्छाग्रतः ।

उद्यान०—इत इतो देवः ।

राजा—अहो रमणीयता माधवीमण्डपस्य । तथा हि—

इह शिरीषवने वनितासखः किमपि गुञ्जितमञ्चति षट्पदः ।
पुनरितोऽपि सरोजवनानिलस्तरलयत्यबलावसनाञ्चलम् ॥२९॥

(पुनरन्यतो ऽवलोक्य) ।

मधुचपलमिलिन्दीलोलमिन्दीवराली-
कलितमतुलमेनं सैन्दुवारं निकुञ्जम् ।
रसिकइव सलीलं कोकिलागीतलोभा-
दिह चलति वसन्ते मालतीमन्दवातः ॥ ३० ॥

उद्यान०—एतदप्यवलोकयतु देवः,

एतां लवङ्गलतिकासुतराङ्गिताङ्गीं
भृङ्गीमनङ्गमधुरध्वनिसाधुरीतिम् ।

---

( १ ) तत् अग्रतो भव ।

लीलालसः कमलकाननकेलिलोलः
सानन्दमेष मधुपः स्पृहयाम्बभूव ॥ ३१ ॥

इतश्च,

सिंहलीघनकुचाचलपाता-
च्चूर्णितश्चपलरीतिमुदस्य ।
वाति मालववधूसुरतान्तो-
च्छ्वासिशीकरहरोऽत्र समीरः ॥ ३२ ॥

अपि च,

एते स्वर्गतरङ्गिणीपरिणमद्राजीवराजीलस-
द्भृङ्गश्रेणिकदम्बचुम्बनभरोदञ्चन्मरन्दोज्ज्वलाः ।
स्वर्नारीकुचकुम्भचन्दनरसोल्लासैर्मनोजन्मनः
साहाय्यं रचयन्ति हन्त परितस्तेऽमी वसन्तानिलाः ॥३३॥

राजा—( मदनाकूतमभिनीय ) ।

बाणान्संहर पञ्चबाण किमु रे निर्मासि मर्मव्यथां
मा मा कोकिल काकलीकलकलैः कर्णस्य दाहं कुरु ।
भो भो मारुत सिन्दुवारकलिकामादाय किं जृम्भसे
सा नो हन्त नवीननीरजमुखी कुत्रापि लभ्या मया ॥३४॥

( इति मूर्च्छितः पतति ) । ( नेपथ्ये कलकलः )

राजा—( सहसोत्थाय विदूषकं प्रति ) सखे ! कथमत्र कोलाहल-
इव श्रूयते ।

विदू०—(१)ता अपसरम्ह ।

( १ ) तत् अपसरावः ।

राजा—कुतोऽत्र भीतिसम्भावना।

विदू०—(१)जं अकिदसंझोपासणं ईदिसं बम्हणं देक्खिअ भूद-
संघाणं कोळाहळो सुणीअदि।

राजा—धिङ् मूर्ख! क भूतचर्चा नूपुरशिञ्जिते। जानामि वस-
न्तोत्सवसम्भार एवायम्।

( ततः प्रविशति मृगाङ्कलेखा कलहंसिका लवङ्गिका परि-
वारसमूहश्च। )

कल०—ए दु२पिअसही(२)।

राजा-(दूरादवलोक्य सहर्षम्)

मौलौ कलिन्दतनयामयमम्बुजाश्रि
नेत्रे मृगाङ्कमदहारि यशःप्रशस्तौ।
स्वर्णाम्बुजाभमुरासि स्मरवापिकाभं
नाभीपथे किमपि यौवनमाविरास्ते ॥ ३९ ॥

विदू०—( ससम्भ्रमं ) परित्ताहि(३)।

राजा—केयमलीकशङ्का।

विदू०—अप्पणो कदे ण भणामि(४)।

राजा—तत्कस्य कृते।

---

(१) यत् अकृतसन्ध्योपासनं ईदृशं ब्राह्मणं दृष्ट्वा भूतसङ्घानां
कोलाहलः श्रूयते।

(२) एतु २ प्रियसखी।

(३) परित्रायस्व २।

(४) आत्मनः कृते न भणामि।

विदू०--णं तुज्झ कदे, जं एसा रक्खसी(१) उम्मीलिदलोअणा इदोमुही तुमं जेव णिज्झाअन्ती इदोज्जेव आअच्छदि ।

राजा-(विलोक्य सोत्प्रासं) सखे ! सैवेयमस्मन्मनश्चकोरोन्मादिनी बाला मृगाङ्कलेखा ।

( पुनः सानन्दम् ) वयस्य !

स्मेराननोल्लसदशोकदलाधराभा
दूरादियं तरलतारकमम्बुजाक्षी ।
लक्षीकरोति हृदयं विषमाशुगस्य
बाणैरिवातिविषमैर्मधुरैः कटाक्षैः ॥ ३६ ॥

अपि च,

अन्तः स्मितसुधासारोल्लसदाननपङ्कजा
अपाङ्गैरङ्गना गाङ्गैस्तरङ्गैरिव सिञ्चति ॥ ३७ ॥

( चिरं निर्वर्ण्य ) वयस्य !

पाण्डु क्षामं वदनमधरो धूसरः श्वाससङ्गा-
दङ्गाभोगे भवति मलिना मालतीपुष्पमाला ॥
लीलामन्दं गमनमधिकं [ प्रेक्षते ] शून्यशून्यं
मन्ये चिन्तां चपलनयना चेतसा स्वीकरोति ॥ ३८ ॥

निः श्वासेनाधरदलतलक्लेशमेषा विधत्ते
धत्ते किञ्च स्फटिकशकलोद्भासि पाण्डुं कपोलम् ।

---

( १ ) ननु तव कृते । यदेषा राक्षसी उन्मीलितलोचना इतोमुखी त्वामेव निध्यायन्ती इतएवागच्छति ।

तन्वी यस्माद्विलसति तनुस्तेन तन्व्याः प्रतीम-
श्चिन्ताभारश्चिरतरमसौ चित्तमङ्गीकरोति ॥ ९ ॥

तदेहि प्राणेश्वरीमभिसरामः । ( इत्यभिसरतः । )

मृगाङ्क०–( राजानमवलोक्य ) हिअअ ! समस्ससिहि २ ।

कल०–( राजानमवलोक्य सस्मितं ) आसणम् २ ।

मृगाङ्क०–( स्वीयमासनमर्पयितुमिच्छति । )

राजा–सुन्दरि, अलमलमायासेन ।

त्वं सर्वस्वं त्वमसि हृदयं जीवितं त्वं मदीयं
त्वं मे प्राणाः कमलनयने मामकीनं मनस्त्वम् ।
त्वं जानीषे यदि सुवदने सोपचारं वचो मे
चेतःसाक्षी भवति भगवानावयोः कामदेवः ॥ १० ॥

( इति पाणौ धर्तुमिच्छति ) ( नेपथ्ये )

मृगाङ्कलेखे ! विरम वसन्तोत्सवात् । भगवती सिद्धियोगिनी द्रष्टुमिच्छति ।

राजा—( ससम्भ्रमं मृगाङ्कलेखां विमुच्य ) कथं सिद्धियोगिनी ।

मृगा०–( राजानमवलोकयन्ती प्रस्थितैव ) ( नेपथ्ये )

वैतालिकयोरेकः–जय जय निजभुजभराक्रान्तभूवलय ! माध्यन्दिनी सन्ध्या तत्रभवतः सुखाय भूयात् । सम्प्रति हि—

दत्वा पाटीरपङ्कं सपदि कुचतटे काऽपि निद्राति बाला
दोलाशय्यासु वेलां गमयितुमधुना हन्त माध्यन्दिनीं ताम् ।

---

( १ ) हृदय ! समाश्वसिहि २ । ( २ ) आसनम् २ ।

एते मातङ्गतुङ्गाः करधृतनलिनीतालवृन्ताः सहेलं
मग्नाः कासारनीरे सपदि जलकणानूर्ध्वदेशे क्षिपन्ति ॥४१॥

( पुनस्तत्रैव द्वितीयः )

जय जय महाराजाधिराज ! कलिङ्गराज ! अम्बरमध्यगतो भगवान् भानुमाली सुखाय ते भूयात् । सम्प्रति हि—

भानोरुस्रैः समन्तादजनि किल वनी पान्थसङ्घाकुलेयं
छायाबह्वाशयास्ते वनमतिगहनं यान्ति वेगात्कुरङ्गाः ।
किञ्च क्रीडाकपोतः पिबति जलकणान्वारियन्त्रप्रयुक्ता-
नङ्के कान्तस्य बाला स्वपिति रतभरप्रौढमज्ञातखेदा ॥४२॥

राजा— ( ऊर्ध्वमवलोक्य ) अये कथं तप्तकार्तस्वरपिण्डसङ्काशमूर्तिरम्बरमध्यमधिरोहति भगवान् भानुमाली । सम्प्रति हि—

मूले मूले तरूणां पिबति जलमसौ चक्रवाको वराकः
कुञ्जे कुञ्जे मृगीभिः सह हरिणयुवा पान्थगीतं शृणोति ।
किंचाऽत्यन्तं गभीरे सरसि निपतितं मत्तमातङ्गयूथं
त्यक्त्वा तापातिरेकात्सरसि विकसितां शल्लकीकाननालिम् ॥४३॥

विदू०-(१)भो वअस्स ! ता एहि देवीए भवणं गदुअ मज्झण्हविहिं कादुं अब्भन्तरमेव पविसामो ।

राजा—वयस्य ! सम्यगभिहितम्, एहि तत्रैव गच्छामः ।

( इति निष्क्रान्ताःसर्वे )

प्रथमोऽङ्कः ॥ १ ॥

---

( १ ) भो वयस्य ! तदेहि देव्या भवनं गत्वा मध्यान्हविधिं कर्तुं अभ्यन्तरमेव प्रविशावः ।

# द्वितीयोऽङ्कः ।

(ततः प्रविशति सिद्धयोगिनी)

( परिक्रम्याऽवलोक्य )

कथं विभातप्राया विभावरी । तथा हि—

प्राची नीचीकरोति स्फुरदरुणकरैरन्धकारप्रपञ्चं
किञ्चासौ चन्द्रपादैस्तिमिरकवलिता धूसराऽभूत्प्रतीची ।
तारास्फाराभिरामाश्चरमजलनिधेस्तीरमुक्ता इवैता-
श्चञ्चन्ति द्रागमूयां परिहरति विधोश्चक्रवाकाङ्गजोऽपि ॥१॥

अपि च,

एते कर्पूरधूलीधवलतनुरुचश्चन्द्रपादाः प्रकामं
पाश्चात्याम्भोधिनीरं सपदि विदधते धूसरप्रान्तरालम् ।
एतेऽपि स्वर्गकन्याकरकमलगलल्लोललाक्षारसाभाः
प्राचीभागं सरागं रचयितुमुदिता भास्करीयाः करौघाः ॥२॥

तदिदानीमाधिखिन्नमानसां वत्सां मृगाङ्कलेखामवलोकयितुं प्रस्थिताऽस्मि । ( इति परिक्रामिति । )

( ततः प्रविशति कञ्चुकी )

( जरानिःसहं परिक्रम्य )

अहो जरा जर्जरीकरोति मे शरीरम् । इयं हि—

निःशङ्कं कम्पमङ्गे रचयति कुरुते मानसे किं च मोहं
प्रत्यङ्गं सङ्गतैव स्फुरति मृदुवलीचारुभावं दधाना ।

साार्द्धं मार्गेऽपि यान्ती न च गुरुवचनं कर्णयोः श्रावयन्ती
केयं हा हन्त दैवादजनि मम जरा क्लीबभावे प्रगल्भा ॥ ३ ॥

( अग्रतोऽवलोक्य । ) कथमेषा भगवती सिद्धियोगिनी उत्कण्ठितहृदया इत एवाऽऽयाति । तदहमुपसर्पामि । ( उपसृत्य ) भगवत्यभिवादये ।

सिद्धि०—प्रत्यभिवादये । आर्य ! विनीतवेष ! मृगाङ्कलेखो-
दन्तमावेदय ।

कञ्चु०—कथमावेदयामि वाचामगोचरोऽङ्गसन्तापो वत्सायाः । तथा हि—

यावच्चन्दनपङ्कमङ्गनिहितं निर्माति काचित्सखी
तावद्धीरसमीरभङ्गुरकणो जातः स पिष्टातकः ।
किञ्चान्यत्सरसं शरीरमिलनान्म्लानं तदानीमभूत्
तस्या एव मृणालकोमलमिदं शय्याविलासस्थलम् ॥४॥

अपि च,

कर्पूरो दहनायते कुमुदिनीनाथोऽपि सूर्यायते
हारोऽस्या भुजगायते मलयजो वातः कृतान्तायते ।
गानं कर्णविषायते मृगमदालेपोऽपि भस्मायते
तस्या एव विधूदये प्रतिदिनं दृक् चन्द्रकान्तायते ॥ ५ ॥

सिद्धि०—तदिदानीं वत्सां कुत्राऽवलोकयामि ।

कञ्चु०—अद्य देव्या माधवीमण्डपे कुसुमशरमहोत्सवव्यपदेशेन
मनोविनोदनाय प्रातरेवापक्रान्ता ।

सिद्धि०—भवतु तत्रैव तां द्रक्ष्यामि। आर्य ! त्वं कुत्र प्रस्थितोऽसि

कञ्चु०—अहमपि एतस्मिन्कुसुमशयने कोमलमृणालीविरचितकुसुमशयनमधिशयानं प्रियवयस्येन मन्दमन्दमाधूयमानकोमलनलिनीदलतालवृन्तानिलं राजानं कर्पूरतिलकमवलोक्य विज्ञायानन्यशरणां पञ्चशरबाधां चिन्तितवानस्मि।

प्रायो मृगाङ्कलेखैव कुरुते तरलं मनः।
नवोदिता मृगाङ्कस्य लेखेवाऽम्भः पयोनिधेः ॥ ६ ॥

तदयमपीदानीम्—

किञ्चिद्वक्ति करोति हासमसकृन्निर्याति सन्तिष्ठते
बाष्पं मुञ्चति किञ्च रोषकलितः शोणां विधत्ते दृशम्।
बालेति प्रणमत्यकाण्डकुपितेत्याभाषते निष्ठुरे
त्यालिङ्गत्यधुना स मन्मथशरैर्नीतः परां दुर्दशाम् ॥७॥

इदानीं च,

उत्कण्ठितैव दैवेन साऽपि सारङ्गलोचना।
यदि स्यादनयोः सङ्गः किं न स्यात्कुशलो विधिः ॥ ८ ॥

( ऊर्ध्वमवलोक्य ) कथमद्यापि प्रभातवेलैव। सम्प्रति हि—

उद्यत्तुषारकणसम्भृतकैरवाली-
कुञ्जेषु मत्तमधुपालिरियं प्रसुप्ता।
वैतालिकैरुषसि सूरकरैः प्रबुद्धा
मन्दं जहाति कमलोदरचारुशय्याम् ॥ ९ ॥

अपि च,

सङ्कोचितेषु कमलेषु सुखं प्रसुप्ता
सेयं द्विरेफपटली मधुपानमत्ता ।
अस्ताद्रिमौलिमिलितेऽपि निशाधिनाथे
शय्याविलासकुतुकान्न विराममेति ॥ १० ॥

अपि च,

पीयूषपानमदमत्तचकोरकान्त-
नेत्राञ्चलैरतितरामवलोक्यमानः ।
हा हन्त कैरववनीवनिताविहारी
जातोऽस्तशेखरमणी रमणीयमूर्तिः ॥ ११ ॥

कंचु०—भगवति ! तद्गच्छ वत्सामवलोकयितुं माधवीमण्ड-
पम् । अहमपि अत्र स्थितं महाराजं देव्यै नि-
वेदयितुम् ।

( इति निष्क्रान्तौ । प्रवेशकः । )

( ततः प्रविशति यथानिर्दिष्टो राजा विदूषकश्च । )

राजा—( स्मृतिमभिनीय )

तन्नेत्रान्ततराङ्कितं मृगदृशस्तत्कर्णकण्डूयनं
सा वक्रोक्तिपरम्परा प्रियसखीहस्तावलम्बोऽपि सः ।
यावन्मो हृदयात्प्रयाति सहसा तावद् द्विरेफावली-
झङ्कारप्रणवोपदेशरसिको जातो वसन्तोदयः ॥ १२ ॥

अपि च,

तारुण्योन्मादलीलानवमिव सदनं रक्तशाचां नवीना
पुष्पेषोर्वैजयन्ती प्रतिदिनमतुला काऽपि लावण्यवापी ।
मर्यादा लोकसृष्टेः सकलयुवमनोबन्धनागारमुच्चै-
श्चातुर्यप्रौढसीमा स्फुरति मम पुरो मान्मथी काऽपि माया॥१३॥

विदू०—(१)भो वअस्स अभिणवसलिलं वज्जिअ मिअतिण्हिआए लंपडो मिओ विअ पुणो पुणो विसुमरोसि एणं चित्तगदं ण पेक्खसि ( इति चित्रफलकं दर्शयति )

राजा—( विलोक्य सहर्षम् )

नवमृदितमृणालीतल्पभूमौ शयाना
ललितविरहलीलापाण्डुभावं दधाना ।
मृगमदघनसारद्रावसँल्लेपिताङ्गी
हरति हृदयमेषा चित्रभूमौ गतापि ॥ १४ ॥

हन्त ! अपूर्णलिखितमेवैतत् । तथा हि—

नोत्तुङ्गैर्बिसखण्डनैरभिनवं लीलागृहं निर्मितं
कस्तूरीघनसारपत्त्ररचना नो वक्त्रदेशे कृता ।
नो गुञ्जन्मधुपं विकासि नलिनं कर्णावतंसीकृतं
नोत्ताम्यत्कुचमण्डले च नलिनीपत्त्रातपत्रं धृतम् ॥१५॥

अपि च,

मदमुखरचकोरी लेखनीया प्रियायाः
प्रलयदहनतुल्यां चन्द्रभासं पिबन्ती ।

---

( १ ) भो वयस्य ! अभिनवसलिलं वर्जयित्वा मृगतृष्णया लम्पटो मृग इव पुनः पुनर्विस्मरसि, एनां चित्रगतां न प्रेक्षसे ।

विरहजनितखेदमौढविज्ञानदक्षा
पुनरिह लिखनीया चक्रवाकी वराकी ॥ १६ ॥

विदू०-(१)भो वअस्स एणं तुमं पेक्खिअ पज्झाउलो होसित्ति जाणामि ।

राजा--सखे तत्किं ब्रवीमि ।

आलोकिता यदारभ्य मया सारङ्गलोचना ।
कल्पायितं तदारभ्य यामिनीभिस्तथा दिनैः ॥ १७ ॥

( पुनः सप्रत्याशं विदूषकं प्रति ) वयस्य !

पुनरपि नयनाग्रिभागभङ्गैरभिनवचन्द्रकरैरिवाऽपविद्धः ।
स्मितमधुरमुदारमायताक्ष्याः प्रचलदपाङ्गतरङ्गितं लभेय ॥ १८ ॥

विदू०-( साटोपं ) (२)मारिसो तुह पिअवअस्सो किं णु क्खु एदं दुल्लहं संभावीअदि ।

राजा—

पञ्चाशुगशरासारस्तूणीरयति मानसम् ।
उन्निद्रशतपत्राक्ष्याः स्फीताधररसादृते ॥ १९ ॥

तदेहि माधवीलतामण्डपतले मत्तकाशिनीमन्वेषायामः ।

( इति परिक्रामतः ) ।

( ऊर्ध्वमवलोक्य ) हन्त मध्याह्नचण्डदीधितिमण्डली कुण्डलीकरोति सर्वतश्छायावितानम् । सम्प्रति हि—

---

( १ ) भो वयस्य एनां त्वं प्रेक्ष्य पर्याकुलो भवसीति जानामि ।

( २ ) मादृशस्तव प्रियवयस्यः किं नु खल्वेतत् दुर्लभं सम्भावयति ।

मम तनुरिव नीरं जीर्णतामेति सद्यो
ज्वलति किरणजालं मन्मनस्तुल्यमेव ।
स्मरदहन इवासौ क्रूरतामेति सूर-
स्तपति सपदि पन्थाः प्रान्तरात्मा यथा मे ॥ २० ॥

तदिदानीं माधवीलतामण्डपैकदेशे मिहिकासरोवरएव तरलाक्षीनिवासं तर्कयामि । तद्भवतु तत्रैव गच्छामः ।

( अग्रतोऽवलोक्य )

मन्दान्दोलितचारुपल्लवमिदं गुञ्जद्द्विरेफाकुलं
निःस्यन्दन्मकरन्दबिन्दुसरसीसम्भारसम्भावितम् ।
एतत्कोकिलकाकलीकलकलैर्वाचालतामागतं
क्रीडाकाननमाविरस्ति मदनोन्माद्यत्कुरङ्गाकुलम् ॥ २१ ॥

( पुनः सकौतुकमवलोक्य )

इह नलिनमिलिन्दी कामबन्दीव गुञ्ज-
त्यविरतमिह बन्दीभावमायाति पान्थः ।
मलयवनविहारी चन्दनामोदवाही
वितरति हृदि मोहं मान्मथं मारुतोपि ॥ २२ ॥

तदभ्यन्तरमेव प्रविशामः ।

विदू०—एदु[१] पिअवअस्सो ।

राजा—(प्रविश्य समन्तादवलोक्य सरोमाञ्चम् )

पान्थाङ्गनाविरचितश्वसनोष्मसङ्गा-
दङ्गारतप्त इव शीतलसंनिवेशम् ।

---

( १ ) एतु२ प्रियवयस्यः ।

गन्ता विनिद्रसरसीसरसीरुहाणा-
मुद्यत्तरङ्गतरलो मुरलासमीरः ॥ २३ ॥

( नेपथ्ये-हला अलं परिदेविदेण )

राजा-(शब्दानुसारेणाऽवलोक्य) अये कथमियं मम मनोरथै-
कचित्रशाला बाला मृगाङ्कलेखा सह सखीभ्यामन्वास्ते ।

विदू०-भो वअस्स किं एसा मिलाणमुणालिआसिढिलेहिं
अंगेहिं पडिवाचंदकलिअं विडंवेदि ।

राजा-सम्यगवधारितम् :

विषमशरशरप्रहारशीर्णैरपि मधुरैरियमङ्गनाऽङ्गकैः स्वैः ।
विशदयति मनोऽनुरागबन्धं चिरविमुखी सुमुखी सखीजनेषु ॥

तथा हि--

परिक्षामैरङ्गैः प्रतिपदुदितेन्दोरिव कला
विलासप्रागल्भ्यं प्रथयति च निश्वासमरुतः ।
विधत्ते तन्वङ्गी स्मरदहनसन्तापसुभगं
कपोले लावण्यं ललितलवलीपाकमधुरम् ॥ २५ ॥

तत्तावदत्रान्तरितावेवाकर्णयावः प्रियाविश्रम्भभाषितानि ।

लवं०-पिअसहि तदो२ ।

---

( १ ) भो वयस्य ! किमेषा म्लानमृणालिकाशिथिलै रङ्गैः प्रति-
पच्चन्द्रकलिकां विडम्बयति ।

( २ ) प्रियसखि ! ततस्ततः ।

मृगां०-तदो तत्थ पमदवणम्मि मअणमहूसवे कोवि णी-लुप्पलसामलंगो अदिगंभीराकिदी मअणो विअ पच्चक्खीकदसरीरो दिट्ठो कुमारो। तं दिअसमारहिअ-

चंदो चंदणमुप्पलाइं णलिणीपत्ताइं मंदाणिलो
कालो कोवि अ चेत्तणच्चिदचलप्पप्फुल्लमल्लीलदा।
लीलामज्जणमुज्जलं च वसणं सज्जा मिअंकोज्जला
जं जं सोक्खकरं जणस्स मह तं चिंताजरोद्दीवणम् ॥२६॥

राजा-(श्रुत्वा सानन्दम्) वयस्य!

अपकारं मनोजन्मा यैः शरैर्मम निर्ममे।
उपकाराय तैरेव साम्प्रतं प्रतिभासते ॥ २७ ॥

मृगां०-हला!

अहिलासो महिलाणं दुल्लहसंगमे दूसहो होइ।
जाणादु पिअसही तं मरणं ताणं कुलवहूणम् ॥ २८ ॥

राजा-वयस्य श्रुतं श्रोतव्यम्।

---

(१) ततस्तत्र प्रमदवने मदनमहोत्सवे कोऽपि नीलोत्पलश्यामलाङ्गोऽतिगम्भीराकृतिर्मदन इव प्रत्यक्षीकृतशरीरो दृष्टः कुमारः। तं दिवसमारभ्य—

चन्द्रश्चन्दनमुत्पलानि नलिनीपत्राणि मन्दानिलः
कालः कोऽपि च चैत्रनर्त्तितचलप्रोत्फुल्लमल्लीलतः।
लीलामज्जनमुज्ज्वलं च वसनं शय्या मृगाङ्कोज्ज्वला
यद्यत्सौख्यकरं जनस्य मम तच्चिन्ताज्वरोद्दीपनम् ॥२६॥

(२) अभिलाषो महिलानां दुर्लभसङ्गमे दुस्सहो भवति।
जानातु प्रियसखी तत् मरणं तासां कुलवधूनाम् ॥ २८ ॥

विदू०–भो वअस्स अण्णदो गमिस्सामो[१] ।

राजा–किमिति ।

विदू०–को णु क्खु अलीअं कण्णे करेदि[२] ।

राजा–किंनामालीकमालपितं कमललोचनया ।

विदू०–जं तुमं दुआरट्ठिदं दुल्लहं ति भणादि[३] ।

राजा–वयस्य !

> एकालयेऽपि बहुचाटुकरं निशीथे
> जीवाधिनाथमुदयन्मदनाग्नितापम् ।
> तं दुर्लभं वितनुते तनुते च खेदं
> व्रीडैव केवलमियं कुलकामिनीनाम् ॥ २९ ॥

कल०–हला अज्ज देवीए पुण्णिमामिअंको अच्चिदव्वोत्ति कहिदं तहिं सो राआ संणिहिदो भवे ता मा उत्तम्म[४] ।

विदू०–(परिक्रम्य अवलोक्य) कहं एसो दिसावहूथणकुंकुमारुणदेहो कंदुओ विअ वारुणीबहूए हत्थे पडिदो भअवं सहस्सकिरणो[५] ।

---

(१) भो वयस्य ! अन्यतो गमिष्यावः ।

(२) को नुखल्वलीकं कर्णे करोति ।

(३) यत्त्वां द्वारस्थितं दुर्लभमिति भणति ।

(४) सखि ! अद्य देव्या पूर्णिमामृगाङ्कोऽर्चयितव्य इति कथितम् । तत्र स राजा सन्निहितो भवेत् तन्मा उत्ताम्य ।

(५) कथमेष दिशावधूस्तनकुङ्कुमारुणदेहः कन्दुक इव वारुणीवध्वा हस्ते पतितो भगवान् सहस्रकिरणः ।

( नेपथ्ये )

वैतालिकयोरेकः—सुखाय सन्ध्याऽवतारो भवतु देवस्य।
सम्प्रति हि—

काश्मीराऽरुणरश्मिरेप भगवानस्ताद्रिमालम्बते
प्राची शङ्करकण्ठभासुरतमःस्तोमैस्तिरोधीयते।
किं चास्मिन्समये मनोरथशतैर्वाराङ्गना केवलं
द्वारोपान्तविलोचना वितनुते शय्याविलासस्थलम् ॥ ३० ॥

अपि च,

दूतीवाक्यशतैरनेकशपथैरेता नवोढाङ्गना
नीयन्ते रतिमन्दिरेषु शनकैः संजातलज्जाभराः।
एषा वारविलासिनी वितनुते भूषाविशेषश्रियं
सेयं हन्त कुलाङ्गना विरहिणी बाष्पोदकं मुञ्चति ॥ ३१ ॥

तत्रैव द्वितीयः-महाराज ! सकलजनमनोविनोदहेतुः सन्ध्याऽवतारस्ते सुखाय भूयात्।
सम्प्रति हि,

शोकात्कोकयुवा करोति करुणं तारं विरावं परं
जानीते तरुणीं न वा विरहिणीं पार्श्वैकदेशस्थिताम्।
एताभिः प्रतिमन्दिरं मृगमदैराचर्य देहं निजं
गुञ्जन्मञ्जुलभृङ्गसुन्दररवं मञ्जीरमुतार्यते ॥ ३२ ॥

अपि च,

कुर्वन्नानन्दकन्दं कमपि मृगदृशां वर्द्धयन्कामदेवं
मत्तानां भृङ्गयूनां सपदि विरचयन् पद्मकोशेषु बन्धम्।

खेदोद्रेकं वितन्वन्ननुभवविषयं चक्रवाकाङ्गनानां
सोऽयं तीक्ष्णप्रतापः सपदि विधिवशादस्तशैलं प्रयाति॥३३॥

राजा-( श्रुत्वा ऊर्ध्वमवलोक्य ) अये कथं कुरुविन्दकन्दलाशि-
लातटङ्कमिव पश्चिमाङ्गनायाः शोभते पद्मिनीरमणः ।
सम्प्रति हि,

दृष्ट्वा कान्तमनागतं मृगदृशः सङ्केतभङ्गोद्गमाद्
दूतीनां वदनानि लोहितदृशा पश्यन्ति गच्छन्त्विति ।
अप्येषा वितनोति मन्मथशरैः सन्तापिता सुन्दरी
नीलाम्भोजमृणालकोमलमिदं शय्याविलासस्थलम् ॥३४॥

वयस्य ! तदेहि कमललोचनामभिसरामः ।(इति परिक्रामतः)

विदू०-(अग्रतोऽवलोक्य) कहं[1] अञ्जणगिरिगंजणचदुरो भ-
वणपारावदकण्ठसामलो अभिसारिआपठमपणअदूदो
खवाचरणच्चकरणो सअलदिसाबहूचोरो विअ सव्वदो ज्जेव
अन्धआरो दीसदि ।

राजा—वयस्य, सम्यगभिहितम् । इदानीं हि—

सूचीभेद्यैः सपदि तिमिरैः पूरिते दिग्विभागे
श्यामे किञ्च स्फुरति समये बान्धवे बन्धकीनाम् ।
शून्या दृष्टिः स्खलति विषमे निर्निमेषोऽपि जन्तु-
श्चित्रं नीलीजलचुलुकितं जीवलोकं प्रतीमः ॥ ३५ ॥

---

( १ ) कथमञ्जनगिरिगञ्जनचतुरो भवनपारावतकण्ठश्यामलो
ऽभिसारिकाप्रथमप्रणयदूतः क्षपाचरनृत्यकरः सकलदिशावधू-
चौर इव सर्वत एवान्धकारो दृश्यते ।

( इति परिक्रामति ) राजा–(पुरोऽवलोक्य)

इयं दैवेन सम्प्राप्ता मया सारङ्गलोचना ।
कुमदोल्लासदक्षोऽयमुदेति च निशाकरः ॥ ३६ ॥

विदू०–भो वअस्स एण्हिं मणास्सिणीणं माणो कहासेसो हुविस्सदि । भो वअस्स जदो दुद्धमुद्धेहिं करेहिं तिहुअणं धवलेन्तो उदेदि कुमुदिणीणाहो ।

राजा—वयस्य ! सम्यगभिहितम् । अयं हि—

मानं निर्द्दलयन् जगद्धवलयंश्चेतोभवं वर्द्धयन्
तृष्णां कन्दलयन् चकोरसुहृदां पाथोधिमान्दोलयन् ।
चिन्तां पल्लवयन्मनोभवशरैः पान्थाङ्गनानामयं
शीतांशुः समुदेति चारुकिरणैश्चन्द्रोपलान्प्लावयन् ॥ ३७ ॥

अपि चेदानीम् ,

चटुलमिह चरन्तश्चन्द्रमश्चन्द्रिकाम्भः
समदमकरकण्ठक्काणमुच्चारयन्तः ।
भ्रमितरलितपक्षं कुर्वते ऽमी रतेच्छ-
मविरतमिह चञ्चूमञ्चयतश्चकोराः ॥ ३८ ॥

( इत्युपसर्पतः )

लवं०–(राजानमवलोक्य ) कहं भट्टा इदोज्जेव आअच्छदि ।

---

( १ ) भो वयस्य । इदानीं मनस्विनीनां मानः कथाशेषो भविष्यति । भो वयस्य ! यतो दुग्धमुग्धैः करैः त्रिभुवनं धवलयन्नुदेति कुमुदिनीनाथः ।

( २ ) कथं भर्ता इतएवागच्छति ।

मृ०—( राजानमवलोक्य ससंभ्रममासनादुत्तिष्ठति )

राजा–सुन्दरि ! अलमलमलमायासेन ।

मृ०—( लज्जावनतमुखी तिष्ठति )

राजा महाभागे ! विलोकय ।

नमद्ग्रीवं वक्त्रं विधुमुखि ! कथं त्वं वितनुषे
तवापाङ्गासङ्गाद्भवतु सुषुमा काऽपि नभसः ।
पिबन्तु प्रत्यग्रामभिनवसुधापूरमधुरां
स्मितज्योत्स्नामेते पतगयुवतीनामपि चयाः ॥ ३९ ॥

लवं०—भट्टा एसो कुमुदिणीणाहो किरणेहिं मह पिअसहिं अदिसेदं बाधेदि । ता इमाए सह अण्णदो गमिस्सम् ।

मृगां०–( धीरमङ्गुल्या तर्जयति । )

राजा–प्रिये !

अमृतकिरणमाली कैरवानन्दकन्दो
हरमुकुटललामं मण्डनं यामिनीनाम् ।
भवति तदपि नित्यं दाहकारी जनानां
मलिनहृदयभाजामेष नूनं स्वभावः ॥ ४० ॥

मृगां०–( अन्यतो गन्तुमिच्छति । )

राजा—

मृदुलतरमृणालीकोमलौ बाहुपाशौ
रचय सुतनु ! कण्ठे कामपाशैर्निबद्धे ।

---

( १ ) भर्तः ! एष कुमुदिनीनाथः किरणैः मम प्रियसखीं अतिशयितं बाधते । तदनया सहाऽन्यतो गमिष्यामि ।

कुपितफणिफणाभः पान्थसीमन्तिनीना-
मयमुदयति यस्मात्कैरवानन्दकन्दः ॥ ४१ ॥

( इति बलादेनां धर्तुमिच्छति )

लवं०-हला अम्हाणं पञ्जरट्ठिदा चओरी चंदिआसालिलं पादुं मुक्कबंधणा कादव्वा । ता एहि सह गमिस्सामो ।

( इति निष्क्रान्ते )

विदू०-अहं पि चेटिअं अणुगमिस्सामि ।

( इति सशिखाबन्धं निष्क्रान्तः )

मृगा-( गन्तुमिच्छति )

राजा-सुन्दरि अलमलमायासेन ।

यदि गच्छसि रम्भोरु मामसम्भाव्य भाषितैः ।
तदा नेष्यति चेतोभूः स्मरणीयामसौ दशाम् ॥ ४२ ॥

मृगा०-महाभाअ ! गमिस्सं[3] ।

राजा-गमिष्यसि ।

मृगा०-केत्तिएण कालेणं ।

राजा-सुन्दरि ! अद्यापि—

नाकारि पीनकुचमण्डलतापहारी
हारोऽपि किञ्च न मया मकरी कपोले ।

---

( १ ) सखि ! अस्माकं पञ्जरस्थिता चकोरी चन्द्रिकासलिलं पातुं मुक्तबन्धना कर्त्तव्या । तदेहि सह गमिष्यावः ।

( २ ) अहमपि चेटिकामनुगमिष्यामि ।

( ३ ) महाभाग ! गमिष्यामि । ( ४ ) कियता कालेन ।

सम्भोगखेदभरमुग्धमदालसाया
नित्यं व्यधायि करभोरु न मन्दवातः ॥ ४३ ॥

( इत्यालिङ्गति )

( नेपथ्ये )

( मिअंकलेहे तुवर २ मिअंकपूअणं कादुं तुवरावेदि देवी । )[1]

राजा—( ससम्भ्रमम् ) सुन्दरि ! गच्छाग्रतः । अहमप्यागतएवाऽनुपदम् ।

मृगां—( सोद्वेगं त्वरितं परिक्रामति )

राजा—( शून्यमवलोक्य लतामण्डपम् )

तस्याः पद्ममयी मृणालरचिता शय्या शिलायामियं
कस्तूरीघनपङ्कसङ्गमलिनं क्रीडारविन्दं परम् ।
हारोऽयं घनसारसङ्गतकणः खेदेन मुक्तस्तया
तस्या एव पदारविन्दगलितो लाक्षारसोऽयं भुवि ॥४४॥

अपि च

इदं किसलयच्छेदभूषितं शयनस्थलम् ।
मया विरचितं चेदं नलिनीदलमन्दिरम् ॥ ४५ ॥

तदिदानीं तत्रैव प्रियासनाथे मकरन्दोद्याने गच्छामः ।

( इति निष्क्रान्ताः सर्वे )

द्वितीयोऽङ्कः ॥ २ ॥

---

( १ ) मृगाङ्कलेखे ! त्वरस्व २ मृगाङ्कपूजनं कर्तुं त्वरयति देवी ।

# तृतीयोऽङ्कः ।

( ततः प्रविशतो रक्षोदम्पती )

ऐका-अले २ कुंडलुहिला लक्खशा शिग्घं२ ।

कुंड०-घॅलिणिके लंबत्थणिए के एशे तह्माणं बुद्धिविहवे जं खादे वि मंशे पीदे वि लुहिले तुवलावेशि ।

लवं०-एदश्शिं काणणुद्देशे मणुश्शगन्धे विअ आअदे । ता पेक्खर ।

कुंड०-( सत्रासं ) शणिअं जंपेहि मश्शकचुण्णे हुविश्शदि ।

संव०-ता लक्खशा पलित्ताहि२ ( इतिसपञ्जररवमालिङ्गति )

कुंड०-घॅलिणि णत्थि तुए जाणिदे शणिअजंपणकालणे ।

लवं०-णत्थि ।

कुंड०-कहिश्शम् । जं अम्हाणं शामी शंखपाले दानवे ।

---

( १ ) अरेर कुण्डरुधिर ! राक्षस ! शीघ्रम२ ।

( २ ) गृहिणिके ! लम्बस्तनिके ! क एष युष्माकं बुद्धिविभवः । यत् खादितेऽपि मांसे पीतेऽपि रुधिरे त्वरयसि ।

( ३ ) एतस्मिन् काननोद्देशे मनुष्यगन्ध इवाऽऽगतः, तत्प्रेक्षस्व२

( ४ ) शनैर्जल्प मस्तकचूर्णं भविष्यति ।

( ५ ) तद्राक्षस ! परित्रायस्व२ ।

( ६ ) गृहिणि ! नास्ति त्वया ज्ञातं शनैर्जल्पनकारणम् ।

( ७ ) नास्ति ।

( ८ ) कथयिष्यामि । यदस्माकं स्वामी शङ्खपालो दानवः ।

लवं०–किं[1] तदो।

कुंदरु––तेण[2] कश्शवि मणुश्शपुलिशश्श घलिणी अप्पणो घलिणी कादुं आणीदा। एण्हिं एत्थ मसाणकालिआघरम्मि पुव्वपडिस्सुदं पूअं णिव्वत्तेदि। शे एशे मणुश्शगन्धे।

लवं०–जुत्तं[3] एदं। ( पुनरन्यतः सगन्धम्। ) अच्चरिअं २ कहं इहावि मणुश्शगंधे। ( निपुणं निरूप्य )। अले लक्खशा के एशे चउरगभीर माणुशे विभिआविदलक्खशे पमत्ते विअ णअआविदतलवालिए इदोमुहे पत्थिदे।

कुंद०–( सवितर्कम् ) जाणे[4] तिए शमाणरूवे तिए विणा किलामंतसरीरे लाअपुलिशे विअ लक्खीअदि। ता एहि तुलिअं इदो अवशलम्ह।

( इति निष्क्रान्तौ प्रवेशकः। )

---

(१) किं ततः।

(२) तेन कस्याऽपि मनुष्यपुरुषस्य गृहिणी आत्मनो गृहिणी कर्तुमानता। इदानीमत्र श्मशानकालिकागृहे पूर्वप्रतिश्रुतां पूजां निर्वर्तयति। स एष मनुष्यगन्धः।

(३) युक्तमिदम्। आश्चर्यमाश्चर्यम्। कथमत्राऽपि मनुष्यगन्धः। अरे राक्षस! कएष चतुरगम्भीरो मानुषो भीषितराक्षसो मत्त इव नर्त्तिततरवारिक इतोमुखः प्रस्थितः।

(४) जाने तया समानरूप स्तया विना क्लाम्यच्छरीरो राजपुरुष इव लक्ष्यते। तदेहि त्वरितमितोऽपसरावः।

( ततः प्रविशति यथानिर्दिष्टो राजा। पार्श्वगतो विदूषकः कलकण्ठश्च। )

राजा—

जीमूतश्यामलाङ्गे वियति तरलयत्युन्मदं बर्हभारं
मायूरीकेलिलोले शिखिनि परिलसन्नीपनिर्यन्मरन्दे।
काले विद्युत्कराले चकितमृगवधूसुन्दरापाङ्गरम्य
रम्भोरु! क्वासि लीना बत तव महती मानरीतिर्विचित्रा॥१॥

( इति शून्यं परिक्रामति )

विदू०—कहं एसो उम्मादो महिलालंपडानं। भोदु कज्जंतरिदं करोमि। ( राजानं प्रति ) भो वअस्स! एदाणं मोराणं पेक्खिअ केलिं अप्पाणं विणोदेहि।

राजा—( विलोक्य )

अयं शिखण्डी विरतो रतान्ते
नृत्यन्मयूरीतरलैः कलापैः।
संवीज्यमानः पुनरप्युदारं
केलीविलासं कुरुते विलासी॥२॥

तदेनमनुगच्छामि। ( मयूरं प्रति )

त्वं धन्योऽसि शिखण्डिन्! काले जीमूतमालिनि क्वापि।
मानन्दयाऽनया यत्प्रियतमया सेवितोपान्तः॥३॥

---

( १ ) कथ मेष उन्मादो महिलालम्पटानाम्। भवतु कार्यान्तरितं करोमि। भो वयस्य! एतेषां मयूराणां प्रेक्ष्य केलिं आत्मानं विनोदय।

( साश्चर्यम् )

चक्रीकृत्य कलापं वक्रीकृतकण्ठनालमलसाङ्गः ।
भ्रमति वयस्य ! मयूरः कन्दरमधुरे वनोद्देशे ॥ ४ ॥

( पुनरवलोक्य )

कथं विलोभयत्ययं जनमनः कलापैः । ननु मूढः खल्वसौ ।
मम प्रियायाः सति केशपाशे विशेषविज्ञानविदां मनांसि ।
अयं मयूरस्तरलैः कलापैः प्रमोदवश्यानि कथं विदध्यात् ॥५॥

( सनिर्वेदम् )

वियोगवह्निप्रमथिताऽन्तरात्मा
तथाऽऽनिरासीत्सरसीरुहाक्ष्याः ।
धाराकदम्बैरयमप्युदारः
स्फारीभवत्यम्बुदकेलिकालः ॥ ६ ॥

( इति मूर्च्छति ।)

कलकण्ठः—वयस्य ! समाश्वसिहि २

( राजा तथैव तिष्ठति )

विदू०—हद्धि २ कहं एण्हिं पणट्ठचेअणो पिअवअस्सो ।

कल०—हन्त !

निर्मिता पांसुलीलापि त्वया सह मया सखे ।
विधातुः प्रातिकूल्येन मामपि त्यक्तुमिच्छसि ॥ ७ ॥

( इति मूर्च्छति । )

---

( १ ) हा धिक् २ इदानीं प्रनष्टचेतनः प्रियवयस्यः ।

राजा ( चिराल्लब्धसंज्ञः विदूषकं प्रति ) वयस्य ! कथं कलकण्ठोपि दैवेनापहसितः ।

विदू०-जं मए कहिदाए रक्खसीए तीए वंचिदोसि तस्स परिणामो एसो ।

कल०-( शनैरुन्मील्य चक्षुषी ) सखे ! ( निर्मितेत्यादि पठति )

राजा—

जीवितोऽस्मि तया तन्व्या गाढमालिङ्गितो यतः ।
मूर्च्छापि दूतिकेवासीन्मम तस्याः प्रदर्शिका ॥ ८ ॥

तदन्यतो गच्छामि । (इति परिक्रामति) ( अग्रतो दृष्ट्वा ) कथमयं यूथनाथः ।

( सोच्छ्वासम् ) वयस्य ! अयं हि,

कृत्वा लीलां ललितसलिलैः पुष्करप्रान्तरेण
त्यक्त्वा मानं कमलमुकुलैः केलिलीलां विधाय ।
शुण्डादण्डे सरसबिसिनीकाण्डमादाय लोलः
कक्षोत्तंसं सपदि कुरुते यूथनाथः प्रियायाः ॥ ९ ॥

तदेतस्मादेव प्रियाप्रवृत्तिमुपलक्षयामि ( इति परिक्रम्य ) ननु मातङ्गपते !

यस्याः पीनस्तनकलशयोर्गाञ्जिमा कुम्भयोस्ते
नूनं यस्या गमनमलसं त्वद्गतेस्तौल्यमेति ।

---

( १ ) यन्मया कथितया राक्षस्या स्त्रिया वञ्चितोसि । तस्य परिणाम एषः ।

उरूकाण्डं करिवरकरस्पर्द्धि यस्याः कृशाङ्ग्याः
सा चेद् दृष्टा कथय करिणीकेलिलीलां विधाय ॥ १० ॥

हन्त मूर्धानं धुनीते । ( सक्रोधम् )

उन्मादमेदुर मतङ्गज मोदमाद्यन् !
मत्तालिकेलिकवलीकृत निर्विवेक ।
दृष्टा त्वयैव कमलायतलोचना सा
स्पष्टं गतिस्त्वयि विभाति यतस्तदीया ॥ ११ ॥

विदू०—अहो उम्माहिआणं सङ्गेण उम्मत्तो होमि । ( राजानं प्रति ) भो वअस्स ! अअं सुगन्धकाणणो गिरिप्पदेसो । एणं दाव पेक्ख२ ।

राजा—( निर्वर्ण्य सहर्षम् ) नन्वेतस्यैव कक्षान्तराले तरलाक्षी-मन्वेषयामि ।

( परिक्रम्यावलोक्य ) हन्त सम्पूर्णमनोरथोऽस्मि ।

गंगातरङ्गधवलः कालिन्दीजलकोमलः ।
अपाङ्ग इव तन्वङ्ग्याः प्रेक्षितः पुरतो मया ॥ १२ ॥

भवतु निपुणं निरूपयामि । ( विलोक्य सविषादम् )

प्रेरितो लीलयाऽपाङ्गः कुरंग्या हरिणं प्रति ।
भ्रमादपाङ्गबुद्धिर्मे तस्या एव मृगीदृशः ॥ १३ ॥

भवतु सारङ्गमेवाभ्यर्थये । ( समुपसृत्याञ्जलिं बद्ध्वा ) हंहो हरिणपते !

---

( १ ) अहो उन्मादितानां सङ्गेन उन्मत्तो भवामि । भो वयस्य ! अयं सुगन्धकाननो गिरिप्रदेशः । एनं तावत्प्रेक्षस्व २ ।

सारङ्गशावनयना नयनान्तपातै-
रालोकिता न भवता विपिने कदाचित् ।
या पूर्णचन्द्रवदना कमनीयनेत्रा
पीनस्तनी ललितुङ्गनितम्बबिम्बा ॥ १४ ॥

हन्त मामनादृत्य कुरङ्ग्या सह विहरति । हा सर्वथा वक्रो विधिः ।

कल०-( राजानं प्रति ) वयस्य !

एतैर्व्याप्ते जलदपटलैरन्तराले समन्ता-
दुत्तालाभिस्तिमिरतातिभिर्भाविते काननान्ते ।
निःशङ्के च प्रसरति निशाचारिणां कण्ठनाले
क्वापि स्थेयं सपदि भवता यावदुन्मज्जतीन्दुः ॥ १५ ॥

विदू-भो वअस्स अहं तुह वंदणं करोमि । पसीददु पिअवअस्सो कहिं वि चिट्ठिस्सामो । णिद्दा मं बाधेदि ।[1]

राजा-वयस्य ! एवमस्तु । विश्रम्यतामस्मिन्कन्दरान्तराले ।

विदू०-अंधआरेण ण किंपि पेक्खामि ।[2]

राजा-विद्युद्दीप एव दर्शयिष्यति ।

( इति प्रविश्योपविशन्ति )

राजा-निर्विश्यतामिदानीं निद्रासुखं वयस्येन । ( कलकण्ठं प्रति ) सखे ! त्वमपि शयनीयमङ्गीकुरु । अहं तु,

---

( १ ) भो वयस्य ! अहं तव वन्दनं करोमि । प्रसीदतु प्रियवयस्यः । निद्रा मां बाधते ।

( २ ) अन्धकारेण न किमपि प्रेक्षे ।

क्षणं ध्यात्वा कुरङ्गाक्षीबिम्बाधररसामृतम् ।
आत्मानं प्रीणयिष्यामि प्राणत्यागपराङ्मुखः ॥ १६ ॥

( उभौ तथा कुरुतः ) ( नेपथ्ये कलकलः )

राजा-( समन्तादवलोक्य ) अहो श्मशानवाटादनतिदवीयानसौ प्रदेशः । तथा हि—

क्रीडत्कौशिककोटिकुट्टनरटद्दात्यूहकोलाहल-
त्रस्तव्यस्तसमस्तफेरुविरुतव्यावल्गदुल्कामुखम् ।
नृत्यत्कौणपकामिनीकुचतटप्राग्भारभूरीभवत्-
प्रेतप्रान्त्रविशालमालमतुलं लीलाश्मशानं पुरः ॥ १७ ॥

तत्सुप्तावेतौ परित्यज्य तत्प्राप्तये श्मशानकालिकामेव स्वीयक्षतजेन तोषयामि । (इति सरभसं परिक्रामति) (पुरोऽवलोक्य) अहह बीभत्सता पिशाचानाम् ! तथा हि—

आकृष्योल्बणदाहजर्जरमपि प्रेताङ्गमुत्कण्ठया
ज्वालाजालकरालिताद् हुतभुजः प्रीताः पिशाचाङ्गनाः ।
संधिच्छेदविनिर्यदुष्णविकसद्व्यामोदमेदोभर-
स्नेहस्निग्धकपालमाकुलललज्जिह्वा लिहन्ति द्रुतम् ॥१८॥

अपि च—

पक्वप्रान्तं नलकमनलात्तूर्णमाकृष्य याव-
न्मज्जापानं कुणपशिशुकः कर्तुमुत्कण्ठितोऽभूत् ।
तावल्लोलल्ललितरसनालेलिहानः कपालं
दीर्घग्रीवः सरति तरसोन्मत्तनक्तंचरौघः ॥ १९ ॥

( अग्रतोऽवलोक्य ) अहो लीलारीतिः कौणपानाम्-

व्यादायोत्तुङ्गदंष्ट्राकुटिलमुखदरीमुल्ललत्ताम्रजिह्वः
प्रेतग्रीवां विदार्य ग्रसति नववसासारमन्तः प्रमोदात् ।
प्रीताभिः कामिनीभिः कृतविकटमहाहासकोलाहलाभिः
पीनोदञ्चत्कुचाभिः सह पिबति ललज्जाङ्गलस्नेहसारम् ।२०॥

इतोऽपि कौतुकोत्तरलो लीलारसः-

तालोत्तोलिततालिकाकलकलक्राम्यच्छृगालार्भकः
क्रेङ्कारस्फुटझर्झरध्वनिनटल्लाङ्गूललीलापरः ।
एताभिर्नरनाभिपङ्कजचयप्रारब्धमालाविधिः
प्रक्रीडन्निह सारमेयतरुणस्तूर्णं नरीनृत्यते ॥ २१ ॥

( अग्रतोऽवलोक्य ) नूनमेतत्कालिकायतनम् । यतः,

नृत्यन्तेते विकटरदनप्रोतलोलान्त्रमाला-
स्तालं पूर्णं सपदि तनुते तालजङ्घः पुरस्तात् ।
मार्दङ्गीयं ध्वनिमविरतं कर्तुमुत्कण्ठितोऽसौ
प्रौढाघातैर्जठरपिठरं पाटयत्यट्टहासः ॥ २२ ॥

तदत्र गत्वा समीहितसिद्धिं सम्पादयामि । (इति परिक्रामति)

( नेपथ्ये )

किं प्राणेश्वरि ! खेदमत्र कुरुषे यत्प्राणनाथे मयि
त्रासं मुञ्च मनस्विनि ! त्यज रुषं किं लोचने साश्रुणी ।
त्वत्प्राप्त्यै यदत्रोचितं पुररिपोः कान्तामिदानीमहं
तत्कृत्वार्चनमिन्दुसुन्दरमुखि ! त्वां चुम्बयिष्याम्यहम् ।२३।

राजा-(श्रुत्वा) कस्याऽयं विकटो निनादः। नूनं कस्याप्यम्बुजाक्षीलाभाय प्रतिश्रुताम्बापूजनस्यास्मत्सदृशस्य व्याहारो भवेत्।

( पुनर्नेपथ्ये )

आपूर्यन्तां रुधिरकलशाः पक्वमांसोपदंशाः
संचीयन्तामिह हि मदिरापूरिताः स्वर्णकुम्भाः।
व्यापाद्यन्तां महिषनिचयाश्चारुशृङ्गोत्तमाङ्गा
निर्वास्यन्तां प्रबलबलिभिः किङ्करैर्विघ्नलेशाः ॥ २४ ॥

राजा-अहो पूजासंविधानचातुरी। तथा हि-

वेतालस्तालिकाभिर्दलयति धरणीपृष्ठमङ्गुष्ठदीर्घः
प्रोड्डीयोड्डीय नृत्यत्यटति बटुरसौ घूर्णयन्नुत्तमाङ्गम्।
घोणामारोप्य भूमौ भ्रमति भवतधूपसन्निधौ भूतपोतः
कर्णाभ्यां लम्बकर्णोऽप्ययमिह तनुते तालवृन्तानिलौघम् ॥

( पुनर्नेपथ्ये )

मन्दारपुजाञ्चितमत्तभृङ्गं
वन्दस्व कालीचरणारविन्दम्।
मया सहैवेन्दुसमानवक्त्रे!
मृगाङ्कलेखे! प्रविहाय रोषम् ॥ २६ ॥

राजा-(श्रुत्वा सत्रासम्) (परिक्रम्याऽवलोक्य) कथमनेन प्रियापहारकेण पूज्यते देवी। ( उच्चैः ) तिष्ठ रे पाखण्डाधम ! तिष्ठ। अयमहमिदानीम्-

तूर्णाघातविदीर्णवक्त्रविकटक्रोडाऽन्तरालोल्लल्त्
कीलालासवपूर्णकर्परचयैरद्यैव कापालिक!।

आधाय त्वदुरःस्थलीयकमलैर्लीलासरोजस्रजं
भूतैरुद्धततांडवैर्भगवतीं कुर्यामहं सस्मिताम् ॥ २७ ॥

(इत्युद्धतं परिक्रम्य) हा प्रिये ! कथं निशाचरकरगाऽसि ।

( ततः प्रविशति यथानिर्दिष्टा मृगाङ्कलेखा शङ्खपालश्च । )

मृगां०-(राजानमवलोक्य सबाष्पम् ) णाह ! परित्ताहि१ ।

राजा-प्रिये ! निःशङ्कमिह स्थीयताम् । ( अयमहमिदानीमिति पूर्वोक्तं पठति ) ।

शंख०-अये कोऽयमस्माकं प्रियासङ्गमे अन्तरायः संवृत्तः । कथमयं दुरात्मा कर्पूरतिलकः । तिष्ठ रे क्षत्रियाडिम्भ ! तिष्ठ ।

त्वत्कण्ठत्रोटनोद्यत्क्षतजनवनदीपूरलीलावगाह-
ग्रस्तान्तस्तापखेदस्तव शवमतुलं स्कन्धसंस्थं विधाय ।
उद्यत्तालीकरालैरतुलभुजबलैरुद्धतैः सार्द्धमेतै-
र्वैतालैः कालिकाऽग्रे सपदि रचयिता नाटकं शङ्खपालः ॥२८॥

राजा-( सस्मितम् )

यद्रामो जनकात्मजाऽपहरणे भीमोऽपि यत्क्रोधनः
पाञ्चालीकचकर्षणे रचितवान् तत्किं न ते विश्रुतम् ।
क्रोधोन्माथितकण्ठपीठरुधिरैरभ्यर्च्य शम्भोः प्रिया
तत्तत्कर्म करोमि येन भवतो नामाऽपि न श्रूयते ॥२९॥

तदङ्गीकुरु कृपाणम् ! नायमशस्त्रे पतति मद्भुजपरिघप्रहारः ।

---

( १ ) नाथ ! परित्रायस्व२ ।

शङ्ख०-

आनीयन्तां कृपाणाः क्वथितरिपुशिरःश्रेणयः श्यामलाङ्गाः
प्रस्तूयन्तां पिशाचैः सह मम सचिवैर्विक्रमास्ते मदीयाः ।
उद्गीयन्तां सुरीभिर्धवलितगगनाः कीर्तयः सर्वतो मे
कामः कामं विधत्तां मयि कुसुमशरैर्मर्मनिर्माथनानि ॥ ३० ॥

कः कोऽत्र भोः । कथं न कोऽपि । आः कथं क्षुद्रराजन्यपोतपराक्रमत्रस्ताः सर्वएवैते ऽन्तर्हिताः । भवत्वहमेव करवालमादाय एनं व्यापादयामि ।

( इति निष्क्रान्तः )

राजा-( सानन्दं मृगाङ्कलेखामालिङ्ग्य ) प्रिये ! यावदहमपि त्वामेकान्ते स्थापयामि ।

मृगां०-जं महाभाअस्स रोअदि ।

( इति निष्क्रान्ताः सर्वे )

इति तृतीयोऽङ्कः ॥ ३ ॥



( १ ) यन्महाभागाय रोचते ।

# चतुर्थोऽङ्कः ।



( ततः प्रविशति विदूषकः )

विदू०-( सहर्षं परिक्रम्य । ) ही ही भोः णिद्दामंथरलोअणं मं परिच्चइअ महिलालंपडो एसो मह पिअवअस्सो कहिं गदो त्ति जाव किंपि अणुसंधेमि ताव तीए सह आअदो ज्जेव । मह समीवे नं णिक्खिविअ तुरिअं कहिं गदोत्ति ण आणे । (अग्रतोऽवलोक्य) कहं एसो कलकंठो । भोदु एदस्स जेव्व मुहादो जाणिस्सं पिअवअस्सस्सविंत्तंतम् । (उच्चैः) अरेरे कलकंठा इदो दाव एहि । कहं ण सुणादि । ( अत्युच्चैस्तदेव पठति )

( ततः प्रविशति सोत्कण्ठः कलकण्ठः । )

कलकण्ठः--

क्रोधव्याधूतखड्गक्राथितनवशिरःशोणितैस्तस्य शत्रो-
रापूर्यापूर्य पात्राण्युचितनरशिरःकर्परैर्निर्मितानि ।

---

( १ ) ही ही भोः निद्रामन्थरलोचनं मां परित्यज्य महिलालम्पट एष मम प्रियवयस्यः कुत्र गत इति यावत् किमपि अनुसन्दधे तावत्तया सह आगत एव । मम समीपे तां निक्षिप्य त्वरितं कुत्र गत इति न जाने । कथमेष कलकण्ठः । भवतुएतस्यैव मुखात् ज्ञास्यामि प्रियवयस्यस्य वृत्तान्तम् । अरे रे कलकण्ठ! इतस्तावदेहि। कथं न शृणोति ।

आराध्य प्रेतभूमौ विरचितवसतिं कालिकां कौशलेन
प्राणप्रेयान् मदीयः प्रियसुहृदसकौ प्रीणयत्यन्तरं नः ॥१॥

तद्भवतु देवीवचनात्सिद्धियोगिनीसन्दिष्टं सम्पादयितुं त्वरितं गच्छामि । ( इति परिक्रम्याऽवलोक्य ) अये कथमयं शाखामृगमुखः ।

विदू०-(तदेव व्याहरति)

कल०-( गत्वा विदूषकं प्रति ) वयस्य ! दिष्ट्या वर्द्धसे प्रियवयस्यस्य विवाहमहोत्सवेन ।

विदू०-कहिं सो पिअवअस्सो[१] ।

कल०-मकरन्दोद्याने तिष्ठति ।

विदू०-तुमं उण कहिं[२] ।

कल०-अहमिदानीं सिद्धियोगिनिवचनात्कृतविवाहनिश्चया देवीति प्रियवयस्यं निवेदयितुम् । भवता कुत्र प्रस्थितम् ।

विदू०-जहिं मोअआणं गंधो आअच्छदि[३] ।

कलकं०-पश्चाद्गमिष्यसि । इदानीं तु प्रियवयस्यस्य विवाहमहोत्सवमुपहर । अहं तु मृगाङ्कलेखाजनकमन्दिरे दूतं विसर्जयामि ।

( इति निष्क्रान्तौ । निष्कम्भकः । )

---

( १ ) कुत्र स प्रियवयस्यः ।
( २ ) त्वं पुनः कुत्र ।
( ३ ) यत्र मोदकानां गन्ध आगच्छति ।

( ततः प्रविशति सोत्कण्ठो राजा पार्श्वस्थितो विदूषकश्च । )

राजा-(सोत्कण्ठं निःश्वस्य )

अम्भोजिनीकुसुमकोमलकान्तिरेषा
जाने यदैव परिरम्भणमाततान ।
स्यूतेव मे हृदयपञ्जरमध्यदेशे
बाणैः प्रचण्डचरितेन मनोभवेन ॥ २ ॥

अपि च—

यच्छीतलेन सरसीरुहकोमलेन
पीयूषसारमधुरेण विजृम्भितेन ।
लीलालसेन मयि लोचनचालनेन
चित्रं विचित्रनयना रचयाञ्चकार ॥ ३ ॥

अपि च—

तस्याः प्रसन्नसरसीरुहलोचनाया
राकासुधाकरसमप्रतिमाननायाः ।
निर्माय मर्मणि मनोजशरप्रहारा-
नम्भोजभृङ्गकुटिलो रचितो दृगन्तः ॥ ४ ॥

( सचिन्तम् ) हन्त वयस्योऽपि न सन्निहितः ।

विदू०-एसम्हि ।

( १ ) एषोऽस्मि ।

राजा—वयस्य ! इहोपविश्य विचिन्तनीयोऽङ्गनासङ्गमोपाय इति ।

विदू०—भो वअस्स चिंतिस्सम् । जइ महाणसाहिवई अहं हुविस्सम् ।

राजा—नायं दुर्लभो मनोरथः ।

विदू०—सुणाहि । ( इति कर्णे एवमेवं कथयति )

( नेपथ्ये )

पाटीराम्भःप्रपञ्चैश्छुरयत धरणिं केतकीपांसुपूरै-
रापूर्यन्तां चतुष्काः कमलनवदलैर्मण्डपा मण्डनीयाः ।
मुक्ताहारैर्विचित्रैर्नगरयुवतयः किं च कुर्वन्तु हारान्
लास्यं वाराङ्गनाभिः स्तनभरविनमन्मध्यभङ्गं विधेयम् ॥५॥

अपि च—

सौधं कर्पूरपूरैः परिचिनुत चिरं चामरैश्चन्द्रशालाः
संमार्ज्यन्तां विचित्राः पथि पथि करिणः सन्तु सिन्दूरपूरैः ।
आनीयन्तां तुरङ्गाः सरणिषु निरणत्किङ्किणीमञ्जुनादाः
कन्योद्वाहोत्सवाय प्रविशति नगरं कामरूपाधिपोऽसौ ॥६॥

राजा—( विदूषकं प्रति ) सा तत्रभवती कामरूपाधिपतनया । उचितमेवैतत् ।

---

( १ ) भो वयस्य ! चिन्तयिष्यामि । यदि महानसाधिपतिरहं भविष्यामि ।

( २ ) शृणु ।

ईदृशी रूपसम्पत्तिरितरस्मात्कथं भवेत् ।
नोदेति कैरवानन्ददायिनी चन्द्रिका रवेः ॥ ७ ॥

( प्रविश्य प्रतिहारी )

जेदु २ भट्टा । भट्टा कामरूएसरो णीदिवुड्ढेण अमच्चेण दारएण चंडघोसेण समं पडिहारभूमीए चिट्ठदि । ता किं पविसीअदु ।

राजा–( विदूषकं प्रति ) सखे ! कलकण्ठसहितस्त्वमेव तूर्णमुपचारपूर्वकं प्रवेशय ।

अहमपि देवीं सम्भाव्य भवदागमनं प्रतिपालयामि । (इति निष्क्रान्तः)

( ततः प्रविशति यथानिर्दिष्टः कामरूपेश्वरः कलकण्ठो विदूषकश्च )

कल०–इत इतोऽत्र भवन्तः ।

चण्डघोषः—अहो अमरेश्वरादप्यतिशेते कलिङ्गेश्वरस्य राज्यशोभा ।

तथा हि—

एकस्तत्र गजाधिपः प्रतिगृहं मत्ता गजेन्द्रावली
तत्रैकस्तुरगोऽत्र वातजवना लक्षाधिकाः सैन्धवाः ।

---

( १ ) जयतु २ भर्ता । भर्तः ! कामरूपेश्वरो नीतिवृद्धेनामात्येन दारकेण चण्डघोषेण समं प्रतिहारभूमौ तिष्ठति । तत्किं प्रवेश्यताम् ।

तत्रैको बुधभावमञ्चति बुधाः सर्वेऽपि ते नागरा-
स्तत्रैकाऽस्ति तिलोत्तमा मृगदृशः सन्त्यत्र सर्वोत्तमाः ॥८॥

नीतिवृद्धः–भर्तृदारक ! किमेतदाश्चर्यं भवतः ।

यत्कीर्त्या धवलीकृते त्रिभुवने मुग्धा किराताङ्गना
गुञ्जापुञ्जमियं जहाति विलसन्मुक्ताधिया सर्वतः ।
जम्बूकादपि भीतिमेति सहसा पारीन्द्रबुद्ध्या करी
स्वां नारीमपि हन्त कोकिलयुवा हंसीधिया मुञ्चति ॥९॥

कामरूपे०–अद्य तनूजालाभमेव दुष्करं मन्यमानेन तद्विवाह-
महोत्सवोऽपि प्रेक्षणीयः ।

अयं च निरुपमगुणो राजा कर्पूरतिलकः ।

विदू०–भो अमच्च एसो जूहवई ।

चण्ड०—

एष क्षुभ्नाति वीथीं तिरयति धरणीं सर्वतो दानपूरैः
पारीन्द्राणां क्षिणोति प्रबलतररवैः कन्दरागर्भशय्याम् ।
रोषान्मत्तालिमालाकुलविकटकटं किं च धूनोत्यजस्रं
विस्रंसच्चारुचामीकरनिकरकृतोद्दामदामा गजेन्द्रः ॥१०॥

अमात्यः–इतोऽपि–

चञ्चत्पुच्छः सफेनं कलयति वदनं किञ्चिदाभुग्नकण्ठं
कुण्ठीकुर्वन्निनादं कठिनतररवैः क्रूरकण्ठीरवाणाम् ।

---

( १ ) भो अमात्य ! एष यूथपतिः ।

सानन्दं किं च चञ्चत्खरखुरनिकरोत्खातधूलीसधूम्रो
यौष्माकीनस्तुरङ्गः कलयति धरणौ ताण्डवाडम्बराणि ॥११॥

क०—भो भोः कामरूपेश्वर ! एष प्रियवयस्यः सह देव्या युष्म-
दागमनं प्रतिपालयन् तिष्ठति। तदुपसर्पन्तु भवन्तः।

काम०—( राजानमवलोक्य )

सौन्दर्येण मनोभवाकृतिरसौ शौर्येण सिंहोपमः
पाण्डित्येन बृहस्पतिप्रतिभटो लक्ष्म्या ऽमराधीश्वरः।
भूभारोद्वहने भुजङ्गमपतिश्चाणक्यशास्त्रे गुरुः
सन्तोषं कुरुते मदीयहृदये सोऽयं धराधीश्वरः॥ १२ ॥

अमा०—सोऽयं कलिङ्गेश्वरस्तदयं किं वर्ण्यते।
यद्दोर्दण्डकठोरखण्डितरिपुस्कन्धाटवीप्रोच्छल-
द्रक्तौघैरहितप्रियानयनजैर्बाष्पैस्तथा कीर्तिभिः।
गङ्गा किं च सरस्वती रविसुता संयोजिता सङ्गरे
मग्नास्तत्र भटा भवन्ति विबुधाः सा तीर्थराजोचिती ॥१३॥

( इत्युपसृत्य )—विजयतां महाराजः।

राजा०—( सरभसमुत्थाय ) आसनम् २।

विदू०—( आसनमर्पयति ) ( सर्वे यथोचितमुपाविशन्ति )

अमा०—महाराज ! एष भर्तृदारकश्चण्डघोषः प्रणमति।

राजा०—(सस्नेहमालिङ्गति)

विदू०-भो अत्तभवं तत्तभोदी मिअङ्कलेहावहिणी देवी विलासवदी पणमदि ।

काम०-वत्से ! पुत्रवती भूयाः ।

विला०-हंजे णोमालिए मिअङ्कलेहं गेण्हिअ एण्हिं वि णाअदा भअवदी सिद्धिजोइणी ।

नवमालिका-आअदेत्ति तक्केमि । जदो पदसद्दो विअ सुणीअदि ।

( ततः प्रविशति मृगाङ्कलेखानुगम्यमाना सिद्धियोगिनी )

सिद्धि०-वत्से ! अद्यैव तव तातसमीपे त्वत्परिणयं विधाय कृतकृत्यामात्मानं सम्भावयामि ।

मृगां०-( लज्जयाऽधोमुखी भवति )

सिद्धि०-वत्से ! अयं तव तातः सह नाथेनाऽलङ्करोति सिंहासनम् । तच्चरितं संभावय । (इत्युपसर्पतः) ( सर्वे सिद्धियोगिनीमवलोक्य ससम्भ्रममुत्तिष्ठन्तो वन्दनं रचयन्ति )

मृगां०-( तातमभिगम्य ) ताद वन्दामि ।

काम०-( गाढमालिङ्ग्य शिरस्याघ्राय च ) वत्से ! सौभाग्यवती भव । अयममात्यः ।

---

( १ ) भोः अत्रभवन्तं तत्रभवती मृगाङ्कलेखाभगिनी देवी विलासवती प्रणमति ।

( २ ) हंजे ! नवमालिके ! मृगाङ्कलेखां गृहीत्वा इदानीमपि नागता भगवती सिद्धियोगिनी ।

( ३ ) आगतेति तर्कयामि । यतः पदशब्द इव श्रूयते ।

( ४ ) तात ! वन्दे ।

मृगां०-कहं एसो अमच्चो णीदिवुड्ढो । अज्ज वंदामि ।

अमा०-वत्से ! अभिलषितेन युज्यस्व । एष ते भ्राता चण्डघोषः प्रणमति ।

( मृगाङ्कलेखामालिङ्ग्य सर्वे यथोचितमुपविशन्ति )

( नेपथ्ये महान् कलकलः सर्वे ससम्भ्रममाकर्णयन्ति )

( पुनर्नेपथ्ये )

भोभोः पौरजानपदाः !

भञ्जन्नायसशृङ्खलाविरचितं बन्धं मदोन्मादितः
कोपाटोपभरेण नागरजनं वेगेन निर्दालयन् ।
शुण्डाताण्डवडम्बरेण सहसा हत्वा निजाधोरणं
क्रोधाक्रान्तकलेवरः सरभसं निर्याति मत्तद्विपः ॥ १४ ॥

अपि च—

गर्जन् संवर्त्तकालक्षुभितघनघटाचण्डगंभीरधीरं
मार्गे पङ्कं वितन्वन् कटुकटविगलद्दानधारासहस्रैः ।
उद्यत्प्रौढासिधारास्फुरितनिजकरैः पत्तिभिः प्रेक्ष्यमाणः
प्रभ्रष्टोऽयं करीन्द्रः प्रविशति सहसा राजवीथीं स्वयूथात् १५॥

( सर्वेससम्भ्रममाकर्णयन्ति )

राजा-न भेतव्यं न भेतव्यमयमहमागत एव ।

---

( १ ) कथमेषोऽमात्यो नीतिवृद्धः । आर्य ! वन्दे ।

( पुनरन्यतो नेपथ्ये )

रे रे मृगाङ्कलेखाकामुक ! काऽसि ।

किं व्यापाद्य त्वदीयक्षतजनवजलैः सिञ्चयाम्यङ्गमारा-
दुद्भ्राम्य त्वामिदानीं चरमजलनिधौ प्रक्षिपामि क्षणात्किम् ।
किं वा त्वन्मांसपूरैर्दहनपटुतरो जाठरः पूरणीयो
मद्भ्राता शंखपालः कथमिव दलितः कालिकामन्दिरान्तः ॥१६॥

( सर्वे सत्रासमाकर्णयन्ति )

काम०—कस्यायं विकटो व्याहारः ।

राजा—( तूष्णीं तिष्ठति )

कल०—( कथयति )

कामरू०—महाननर्थोद्भवः ।

मृगां० ( सत्रासं वेपते )

विलासवती—( भयं नाटयति )

विदू०—रक्खदु २ पिअवअस्सो ।

राजा—भगवतीं नमस्कृत्य तिष्ठन्तु भवन्तः । यावदहमेतमास्कन्द्य संभावयामि ।

( इत्युद्धतं परिक्रम्य निष्क्रान्तः )

विदू०—( कलकण्ठं प्रति ) अज्ज ! पेक्ख २ कोदूहलं जं एसो गइंदो वावादेदि दाणवं ।

---

( १ ) रक्षतु २ प्रियवयस्यः ।

( २ ) आर्य ! प्रेक्षस्व २ कौतूहलम् । यदेष गजेन्द्रो व्यापादयति दानवम् ।

कल०-( विलोक्य सहर्षम् ) सखे ! सम्यगुपलक्षितम् । पश्य,

यावत्कोदण्डकाण्डं विशति हृदि दलत्पञ्जरोद्यान्निनादं
तावन्मातङ्गराजः प्रकटयति रदैरत्र मालान्तरालम् ।
यावत्स्वर्गाङ्गनानां करकमलतलात्पुष्पवृष्टिर्जजृम्भे
तावत्प्राणैर्वियुक्तः पतति भुवि महादानवो व्यात्तवक्त्रः ॥१७॥

( प्रविश्य पटीक्षेपेण राजा ) (भगवतीमभिवाद्य सर्वे यथोचितमुपविशन्ति )

विला०-कहं एत्थ रअणचूडो न दीसदि ।

( प्रविश्य )

रत्नचूडः-अहो बलवती पराधीनता । तथा हि—

सर्वोर्वीरमणं विधातुमधुना देवं मया निर्मिता
माया काऽपि यया नवीनतरुणीलाभः प्रभोः स्यादयम् ।
देवी स्वाऽवरजामनेकसुकृतैरासाद्य सन्तोषिता
यत्सत्यं च तथाऽपि किं नु हृदयं साशङ्कमास्ते मम ॥१८॥

( परिक्रम्याऽवलोक्य ) एष महाराजः सपरिवारः सानन्दमास्ते । तद्यावदुपसृत्य निवेदयामि दिग्विजयप्रेषितमागतं विचित्रपराक्रमं तिग्मप्रतापम् । (उपसृत्य) विजयतां महाराजः ।

राजा-( सस्मितम् ) अभिवादये ।

---

( १ ) कथमत्र रत्नचूडो न दृश्यते ।

रत्न०-महाराज! विचित्रपराक्रमस्तिग्मप्रतापो द्वारदेशमध्यास्ते।

राजा-अविलम्बितं प्रवेश्यताम्।

अमा०-( निष्क्रम्य तिग्मप्रतापेन सह प्रविशति )

सेनाप०-( उपसृत्य ) विजयतां महाराजः।

राजा-वत्स! चिरायुर्भूयाः।

विदू०-एदं आसणं एत्थ उवविसदु अमच्चो।

राजा-अमात्य! अत्रोपविश्यताम्। सेनापते! त्वमप्यासन-मङ्गीकुरु।

( इति यथोचितमुपाविशन्ति )

राजा-सेनापते! कथय स्वायत्तमुर्वीमण्डलम्।

सेना-(विहस्य) महाराज!

प्रालेयाचलचारुचन्दनवनीचन्द्रप्रभाविभ्रम-
क्षीरोदक्षयकारिणां प्रविलसत्कर्पूरशोभाजुषाम्।
क्षोणीकान्तनितान्तकान्तकुमुदव्याधूननप्रेयसां
नित्यं ते यशसामिदं त्रिभुवनं स्वाधीनभावं गतम्॥ १९॥

सम्प्रति हि,

अतिघनतिमिरेऽपि श्वेतभूषाः प्रयातुं
प्रियतमवसतिं तामुत्सुकाः स्वर्गकन्याः।

---

( १ ) इदमासनम्। अत्रोपविशत्वमात्यः।

सपदि कलितवर्णं चारु गायन्ति गौरी-
गुरुगजपतिगंगागौरमुच्चैर्यशस्ते ॥ २० ॥

तथाऽप्याकर्णय,

वङ्गः प्रोन्मूलिताङ्गः कलयति सहसा सङ्गमाशानुबन्धं
तैलङ्गो रङ्गभूमौ सुरपतितरुणीसङ्गमङ्गीचकार ।
अङ्गः साङ्गोऽयमास्ते कलितनिजवधूकङ्कणः कुण्डिनेशो
वैदर्भो दर्भचूडाकथितनिजबलो भाति युष्मत्प्रतापात् ॥२१॥

राजा-(सर्वानवलोक्य ) कः कोऽत्र भोः ।

( प्रविश्य दौवारिकः )

आज्ञापयतु देवः ।

राजा-सर्वानेतान्पूजय यथोचितैरुपचारैः ।

दौवा०-यथाज्ञापयति देवः । ( इति निष्क्रामति )

रत्न०-महाराज ! क्षम्यतां यदनिवेद्य विहितम् ।

राजा-किमनिवेद्य विहितम् ।

रत्न०-येयं मृगाङ्कलेखा कामरूपेश्वरतनया तां सिद्धकथितसार्वभौमपतिकामाकलय्य यावत्त्वदर्थं प्रार्थयामि तावद्भगवत्या सिद्धियोगिन्या समाकृष्टैवान्तःपुरम् ।

राजा-( स्वगतम् ) कथममात्यबुद्धिरपि वागुरायते । ( प्रकाशं ) को दोषः ।

काम०–( विलासवतीं प्रति ) एषा ते भगिनी, इदानीं यदुचि·
तं तद्विधेहि ।

विला०–भअवदि तुमं अज्जउत्तस्स हत्थे इमं पडिवादेसु ।

सिद्धि०–( मृगाङ्कलेखां हस्ते गृहीत्वा ) राजन् ! एषा यथा
बन्धुजनशोचनीया न भवति तथा विधेहि !

राजा–( तथेति हस्तौ प्रसार्य मृगाङ्कलेखां गृह्णाति )

( नेपथ्ये दुन्दुभिध्वनिः । )

रत्न०–( ऊर्ध्वमवलोक्य ) आश्चर्यमाश्चर्यम् ।

नृत्यन्तीनाममरसुदृशां किङ्किणीमञ्जुनादैः
पुष्पश्रेणीपतनविलसद्भृङ्गवाचालताभिः ।
गीर्वाणानां मुदितमनसां साधुवाचां प्रचारैः
पूर्णीभूतः सकलभुवने दुन्दुभिध्वान एषः ॥ २२ ॥

सिद्धि०–महाराज ! तत्कथय किं ते भूयः प्रियमुपकरोमि ।

राजा–( सानन्दम् ) अतः परमपि प्रियमस्ति ।

क्षोणीराज्यं सपदि विहितं कान्तया सार्द्धमुच्चै·
र्देवी तुष्टाऽप्यजनि भगिनीलाभमासाद्य सद्यः ।
स्फीता कीर्तिः सपदि रचिता चन्द्रवंशस्य तस्मात्
कस्मिन्निष्टे भगवति ! पुनः कर्तुमीहा तवाऽऽस्ते ॥ २३ ॥

---

(१) भगवति ! त्वं आर्यपुत्रस्य हस्ते इमां प्रतिपादयस्व ।

तथापीदमस्तु भरतवाक्यम् ।

यावद्ब्रह्माण्डभाण्डे स्फुरति स भगवान् पद्मिनीजीवितेशो
यावत्क्षोणीं फणीन्द्रः कलयति शिरसा यावदास्ते शशाङ्कः ।
यावत् कल्पान्तवातो न चलति भुवने सन्तु तावत् समस्ता
विस्फूर्जत्क्षीरधाराद्रवमधुरतराः सत्कवीनां प्रबन्धाः ॥२४॥

( इति निष्क्रान्ताः सर्वे )

चतुर्थोऽङ्कः ॥ ४ ॥



समाप्तेयं मृगाङ्कलेखाभिधाना नाटिका
कृतिरियं विश्वनाथदेवकवेः ॥



# मृगाङ्कलेखायां शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| निजजभुज | निजभुज | १७ | १७ |
| मन्वेषायामः | मन्वेषयामः | २४ | १६ |
| मुतार्यंते | मुत्तार्यंते | २९ | १९ |
| मञ्चयतश्चकोराः | मञ्चयन्तश्चकोराः | ३१ | १६ |
| सुन्दरापाङ्गरम्य | सुन्दरापाङ्गरम्ये | ३७ | ६ |
| प्रान्तरणे | प्रान्तरेण | ३९ | १२ |
| सबाष्यम् | सबाष्पम् | ४५ | ८ |

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'astri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājña Pāṇdeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc by Gopinath Kaviraj, M.A, Rs. 2–0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1- 2

No. 6—(Part I)-The Bhāvanā Viveka by Maṇdana Miśra, with a Commentary by Bhaṭṭa Umboka.
Ed. with Introduction etc. by M. M. Gañgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6-(Part II)—Ditto Ditto Rs. 0–12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M..A Rs. 1–8

No 7—( Part II ) Ditto Ditto Rs. 1–4

No. 8—The Kāvyadākinī, by Gañgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs 0–10–6

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'aṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The [illegible] (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs 0-14

No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-12

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A.
Rs 2-4

No. 19-( Part.II ) Ditto Ditto Rs. 2-12

No 19-( Part. III ) Introduction etc. ( In Preparation. )

No. 20 The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭācharya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchanana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares.
Rs. 1-2

No 21-( Part-II ) Ditto Ditto

No. 22-The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23-Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24–S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma-Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post–Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares.

No. 25–Sāpiṇḍyakalpalatikā by Sadāśiva deva alias Āpadeva with a commentary by Nārāyaṇa Deva.

Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares.

No. 26–Mṛgāṅkalekhā Nāṭikā by viśvanātha deva Kavi.

Edited with Introduction etc. by Nārāyaṇa Sāstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES :

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The view-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā-nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśesika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā nātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as depicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vājasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nāth Roy.

(h) Notes and Queries (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—(In progress)

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) Studies in Hindu Law (5): Evidence, by Ganganatha Jhā.

To be had of
The Superintendent Government Press.
Allahabad. U. P.